सुन्दरी भैरवी धूम्रा त्वकुलत्वेन[1] कीर्त्तिता ।
अकुलास्तु महेशानि तत्पूजायां व्रजेत् सदा ॥ ४२ ॥
तैर्नान्यत्र प्रगन्तव्यं इति संक्षेपतो मतम् ।
प्रमादात् यदि गच्छेद्दै तेषां शापो भवेद् ध्रुवम् ॥ ४३ ॥
पूर्णाभिषेकराहित्यं वीरपक्षे[2] मतं शिवे ।
पूर्णचक्रे महेशानि पूर्णचक्री भवे[3]द् ध्रुवम् ॥ ४४ ॥
ऊर्ध्वाम्नाये महेशानि ऊर्ध्वाम्नायी व्रजेत् सदा ।
निर्वाणदीक्षितो देवि निर्वाणपूजने व्रजेत् ॥ ४५ ॥
षट्शाम्भवक्रमे देवि शाम्भवार्चाविधौ व्रजेत् ।
मेधादीक्षाविधौ देवि नेदं[4] मानं मयेरितम् ॥ ४६ ॥
सिद्धरूपे महेशानि स्वे[5]च्छया कर्म्म वा चरेत्[6] ।
गौडदक्षिणकाश्मीरसम्प्रदायक्रमाद्भवेत् ॥ ४७ ॥
गौडे सर्वत्र गमनं[7] कीर्त्तितं तु मया तव ।
षडाम्नाये महेशानि काश्मीरे गमनं भवेत् ॥ ४८ ॥
कुलाकुलविभेदेन केरले गमनं भवेत् ।
पूर्णाभिषेकयुक्तानां सर्वत्र गमनं शुभम्[8] ॥ ४९ ॥
पूर्णाभिषेकी देवेशि यस्मिन् देशे विराजते ।
स देशो धन्यतां याति समन्तात्त्रययोजनम् ॥ ५० ॥
पूर्णाभिषेकयुक्तानां शक्तिपातः प्रजायते ।
अयोग्यस्यापि कालेन कालीविद्यारतस्य च ॥ ५१ ॥
चतुःषष्टिविधौ देवि शक्तिपातो भवेत् ध्रुवम् ।
नील[9]सारस्वते तन्त्रे पंचधा परिकीर्त्तितः ॥ ५२ ॥
श्रीसुन्दर्य्यां महेशानि शक्तिपातोऽष्टधा भवेत् ।

[1] D कुलाकुले । [2] C N °क्ष° । [3] N भजे° । [4] C N °द° । [5] [6] C चे° ।
[7] C °माभेत् । [8] B D गन्तव्यं । [9] C भवेत् । [9] B धारी ।

छिन्ना[1]विद्याविधौ देवि शक्तिपातश्चतुर्विधः ॥ ५३ ॥
बगलाद्या[2]सु विद्यासु शक्तिपातो द्विधा भवेत् ।
वैष्णवाद्यागमे देवि शक्तिपातस्तु पंचधा ॥ ५४ ॥
इति संक्षेपतः प्रोक्तं रहस्यं सादरं शृणु ।
शक्तिं विना महेशानि पूजनं यः समाचरेत् ॥ ५५ ॥
स दरिद्रो[3] मम[4] द्रोही तस्य नाशो भविष्यति ।
शक्तिशिवात्म्यमासाद्य पूजनं समुपाचरेत् ॥ ५६ ॥
एवं यः कुरुते मर्त्यः स शिवो नात्र संशयः ।
शक्तेस्तु पूजनं कार्य्यं दिव्यभावफलाप्तये ॥ ५७ ॥
इति संक्षेपतः प्रोक्तं पात्रभेदं शृणु प्रिये ।
रसवेद[5]मितैः पात्रैः संख्या सर्वोत्तमा भवेत् ॥ ५८ ॥
कलासंख्यामितैः पात्रैः संख्या प्रोक्ता तु मध्यमा ।
नाथसंख्यामितैः पात्रैः संख्या प्रोक्ता कनिष्ठिका ॥ ५९ ॥
बाणसंख्यामितैः पात्रैः संख्या सामान्यकर्मणि ।
केरलश्चैव काश्मीरो गौडश्चैव तृतीयकः ॥ ६० ॥
केरलाख्यमते देवि वारि[6]पात्रं तु दक्षिणे ।
काश्मीरे तर्पणे भेदो गौडे वामकरे भवेत् ॥ ६१ ॥
देवीप्रणवनामा च निर्गुणप्रणवस्तथा ।
बगला कमला वाणी पराद्याश्च शतोत्तराः[7] ॥ ६२ ॥
अथातः संप्रवक्ष्यामि निर्णयं प्रणवस्य च ।
कलापञ्चकसंयुक्तस्तत्क्रमं शृणु पार्वति ॥ ६३ ॥
अकारश्च उकारश्च मकारश्च तृतीयकः ।
नादश्चतुर्थो गदितः पंचमो बिन्दुरीरितः ॥ ६४ ॥

[1] D °म°। [2] D कालविद्या°। [3] N °द्री। [4] D भवे°।
[5] N °भेद°। [6] BD बलि। [7] D प्रणवोत्तराः।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताः प्रणवं च समाश्रि[1]ताः ॥ ६५ ॥
शृणु यत्नेन देवेशि कलासप्तकरूपिणम् ।
कलासप्तस्वरूपं च पञ्च[2]धा भेद ईरितः[3] ॥ ६६ ॥
अकारश्च उकारश्च मकारश्च तृतीयकः ।
नादबिन्दुस्ततो देवि नादातीतस्ततो भवेत् ॥ ६७ ॥
बिन्द्वतीता सप्तमी स्याच्छाम्भवी परिकीर्त्तिता ।
शक्तीः[4] शृणु महेशानि किमितोऽपि रहस्यकम् ॥ ६८ ॥
अकारश्च उकारश्च मकारश्च तृतीयकः ।
नादश्च तदतीतश्च[5] बिन्दुश्चैव ततः परम् ॥ ६९ ॥
बिन्द्वतीता सप्तमी स्यादेवं शक्तिकला[6] शिवे ।
शाक्तशक्ति[7]क्रमेणैव कलासप्तकमीरितम् ॥ ७० ॥
आदौ परा विनिर्दिष्टा ततश्चैव परात्परा ।
तदतीता तृतीया स्यात् चित्परा च चतुर्थिका ॥ ७१ ॥
तत्परा पञ्चमी ज्ञेया तदतीता रसाभिधा ।
सर्वातीता सप्तमी स्यादेवं सप्तविधाः कलाः ॥ ७२ ॥
पञ्च क्रमेण देवेशि शृणु सप्तकलासतीम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ ७३ ॥
शान्तिश्च तदतीता च कलासप्तकमीरितम् ।
चतुष्टयं तु कशिपुः मृतकश्च सदाशिवः ॥ ७४ ॥
[8]ब्रह्मादयश्चतुष्पादाः कशिपुस्तु[9] सदाशिवः ।
आच्छादनं तु कामेशस्तत्रस्था सुन्दरी कला ॥ ७५ ॥

[1] B ° मन्वि °। [2] D N सप्त °। [3] D ° मीरितम् । [4] C ° कि।
[5] C D N ° ता च। [6] D N ° की. कला.। [7] B D N शंकशाक्ती °।
[8] This line is omitted in C N। [9] MSS ° कल्पं तु।

प्रणवः सुन्दरीरूपः कलासप्तक[1]संयुतः ।
पञ्चप्रणवयोगे तु कलासप्तकपञ्चके[2] ॥ ७६ ॥
सप्ततारेति विख्याता कथिता पूर्वमेव तत् ।
हंसरूपा कामकला तत्स्वरूपं निगद्यते ॥ ७७ ॥
हकारेण बहिर्याति सकारेण विशेत् पुनः ।
हकारस्य सकारस्य लोपे कामकला भवेत् ॥ ७८ ॥
पक्षद्वयेन रहितो हंसः कामकला भवेत् ।
सोऽहमेतस्य देवेशि रूपं कामकलाभिधम् ॥ ७९ ॥
सोऽहमित्यत्र देवेशि प्रणवः परिनिष्ठि[3]तः ।
जीवः[4] पक्षद्वयत्यागात् प्रणवः परिकीर्त्तितः ॥ ८० ॥
पराप्रासादविद्यायां एवमेव प्रकीर्त्तितम् ।
पक्षद्वयं सकारे च गगनेऽपि द्वयं भवेत् ॥ ८१ ॥
र[5]कारद्वययोगे तु सकारोत्पत्तिरीरिता ।
ई[6]कारैकारयोगे तु हकारः कीर्तितो मया ॥ ८२ ॥
अत एव महेशानि चतुःपक्षस्वरूपिणी ।
चतुश्चरणरूपा च परा[7]प्रासाददेवता ॥ ८३ ॥
आद्ये आद्यं परित्यज्य चरमे तु तदन्तकम् ।
पक्षद्वयेन संन्यक्तः[8] प्रणवः परिकीर्त्तितः ॥ ८४ ॥
र[9]कारः प्रथमः पक्षस्त्वेकारस्तु द्वितीयकः ।
मायाबीजादिके देवि रतिबीजादिकेऽपि च ॥ ८५ ॥
प्रणवस्य समुत्पत्तिर्वर्तते प्रियवादिनि ।
अर्द्धनारीश्वरो देवि हकारः परिकीर्त्तितः ॥ ८६ ॥
शक्तिबीजं तथा प्रोक्तं शृणु कामकलां शिवे ।

[1] N °क्षं°। [2] B °स्वरूपकः। [3] D °श्चि°। [4] BDN °वे।
[5] D स°। [6] D ओं°, B इ°। [7] N °र°। [8] B °सक्तं, D °युक्तः।
[9] D ब°।

ईकारार्द्धमतं बिन्दु[1]मुखं मानुरयोगतम्[2] ॥ ८७ ॥
स्तनौ[3] दहनशीतांशुर्योनिर्हार्द्धं[4] कला भवेत् ।
हकारार्द्धपदे देवि ईकारैकारमीरितम् ॥ ८८ ॥
मुखं बिन्दुर्महेशानि तदधस्तु कुचद्वयम् ।
हकारार्द्धकलारूपं योनिचक्रं विदुः प्रिये ॥ ८९ ॥
अधोबिन्दुर्महेशानि पराख्यः प्रकीर्त्तितः ।
योनिबिन्दुर्महेशानि तत्पराख्यवान् भवेत् ॥ ९० ॥
कुच[5]बिन्दुर्महेशानि तदतीता प्रकीर्त्तिता ।
चित्परा तु द्वितीयस्तु तदतीता मुखे भवेत् ॥ ९१ ॥
सर्वातीता चण्ड[6]रूपा बीजादूर्ध्वं व्यवस्थिता ।
वाच्यातीतां कलां विद्धि ई[7]कारोर्ध्वकलां शिवे ॥ ९२ ॥
इति कामकलारूपं कीर्त्तितं तु मया तव ।
अन्यचैव[8] शकारन्तु शक्तिद्वयपुटं भवेत् ॥ ९३ ॥
र[9]ंकारस्तु महेशानि काली कामकला मनुः ।
काली कामकला देवि मुख्या हंसगता भवेत् ॥ ९४ ॥
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ।

श्रीशिव उवाच ।

गृहवास्तुं प्रवक्ष्यामि येन देव[10]मयो भवेत् ॥ ९५ ॥
ईशानादिनिर्ऋत्यन्तं वास्तुसर्पः प्रकीर्त्तितः ।
वाय्वादिवह्निपर्य्यन्तं सर्पहस्तद्वयं भवेत् ॥ ९६ ॥
पैत्र्यां पादयुगं[11] देवि ऐशान्यां शिर एव च ।
सर्पगात्रमिदं प्रोक्तं ज्ञात्वा कर्माणि कारयेत् ॥ ९७ ॥
शिरोघाताद्भवेन्मृत्युः पुच्छे[12] सर्वार्थनाशनम् ।

[1] D °न्दु, N °न्दुं । [2] C B °तां । [3] C ततो । [4] C °द्वन्द्व, D °द्वं । [5] ऊर्द्ध° । [6] C D °न्द्र° । [7] D ह° । [8] D °च ह° । [9] D ह° । [10] B °वा । [11] B D N °युगं । [12] C पूर्वं ।

पिण्डि[1]कायां भवेद्दुःखं क्रोडे सर्वार्थसाधनम् ॥ ९८ ॥
चलस्थिरप्रभेदेन द्विधा वास्तु प्रकीर्त्तितम् ।
नैर्ऋत्यां पूजयेद्देवि वास्तुसर्पगृहाधिपम् ॥ ९९ ॥
वास्तुपूजां विधायाथ कूर्मं ज्ञात्वा प्रयत्नतः ।
स्थानसंशोधनं कृत्वा स्वयं तु व्रत[2]वान् भवेत् ॥ १०० ॥
परान्नं च परद्रव्यं तथैव तु प्रतिग्रहम् ।
परस्त्रीं परनिन्दां च मनसाऽपि विवर्जयेत् ॥ १०१ ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः[3] कथं सिद्धिर्वरानने ॥ १०२ ॥
प्रतिग्रहं महेशानि सर्वथा परिवर्जयेत् ।
प्रतिग्रहोत्थपापं तु श्रृणु यत्नेन शाम्भवि ॥ १०३ ॥
मृते तु नरकं यायात् स्वस्वकर्मानुसारतः ।
भोगोत्तरं महेशानि पितृलोकं व्रजन्ति ते ॥ १०४ ॥
ततो व्रजन्ति ते देवि सूर्यलोकं प्रतिग्रही ।
ततश्चन्द्रपुरं गच्छेत् ततश्चन्द्रत्वतां व्रजेत् ॥ १०५ ॥
भारत्वं प्राप्य देवेशि भूमौ वर्षति योगतः ।
पूर्वदत्तं त[4]दन्नं हि इह प्रत्यक्षगोचरम् ॥ १०६ ॥
दत्तं विना महेशानि न पूर्त्तिः क्वापि दृश्यते ।
तदन्नं भाण्डगोपे[5]न चाग्नौ दाहत्वतां व्रजेत् ॥ १०७ ॥
पाके[6] तूदरपूर्त्यर्थं भुज्यते सर्वजन्तुभिः ।
यावत्तु पूर्वज[7]नुषि दत्तं दापितमेव तु ॥ १०८ ॥
तदेव प्राप्यते देवि नाद्यमुपतिष्ठते ।
नाधिकं न च वै न्यूनं प्राप्यते जन्तुभिः क्वचित् ॥ १०९ ॥

[1] पीडि°। [2] D तत्त्व°। [3] C °पु। [4] C य°। [5] B D °दोये°।
[7] N °ढ°।

तदन्नं[1] देवदेवेशि तस्य विष्ठान्वतां व्रजेत् ।
तत्र देवि कृमिर्भूत्वा तदन्ते चान्ययोनिभाक् ॥ ११० ॥
प्रतिग्रहं परित्यज्य मन्त्रसिद्धिं समाचरेत् ।
जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ॥ १११ ॥
सूतकद्वयसंयुक्तः स[2] म[3]न्त्रो नैव सिध्यति ।
जन्मसूतकजं देवि संस्कारदशकं शिवे ॥ ११२ ॥
जननादिषु गुह्यान्तं संस्कारदशकं शिवे ।
दिवसा दश वै देवि सूतके परिकीर्त्तिताः ॥ ११३ ॥
दशसंस्कारयोगेन जातसू[4]तकवारणम् ।
जपादिभोजनान्तं हि दशाङ्गा[5] तु पुरस्क्रिया ॥ ११४ ॥
मृत[6]सूतकमेतद्धि दशाहं सूतकं मतम् ।
जीवहीनो यथा देही सर्वकर्म्मसु न क्षमः ॥ ११५ ॥
पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्त्तितः ।
द्वितीयं तु मया प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥ ११६ ॥

श्रीदेव्युवाच ।

विश्वेश श्रोतुमिच्छामि चक्रमष्टाष्टकाभिधम् ।
रहस्यातिरहस्यं च वद मे करुणानिधे ॥ ११७ ॥

ईश्वर उवाच ।

रहस्यातिरहस्यं हि कथ्यते गोपनं कुरु ।
उत्तमं मध्यमं चैव तृतीयमधमं भवेत् ॥ ११८ ॥
उत्तमं शिवचक्रं स्यान्मध्यमं वैष्णवं भवेत् ।
अधमं कामचक्रं स्याज्जीवचक्रमिति स्मृतम् ॥ ११९ ॥

[1] C तं दत्तं । [2] B C D द्वाभ्यां तु सहितः । [3] C त॰ । [4] D ॰सू॰ ।
[5] B ॰शा । [6] C नष्ट॰ ।

जीवचक्र तथा प्रोक्त जीवमेरुस्तथा त्वयम् ।
पङ्क्त्याकारेण देवेशि चक्राकारेण वा जपेत् ॥ १२० ॥
बिन्दुस्थाने स्वय स्थित्वा निर्विकल्पो जितेन्द्रिय ।
अविकार समासाद्य पूजा कुर्यात्प्रयत्नत ॥ १२१ ॥
विकारी जायमानस्तु साधको न[1]श्यति ध्रुवम् ।
त्रिशत षष्टि देवेशि देव्यावरणशक्तय ॥ १२२ ॥
पञ्चविंशति देवानि पश्चि[2]माशक्तय क्रमात् ।
षट् षड्दर्शने प्रोक्ता षडाम्नाये तु षड् भवेत् ॥ १२३ ॥
द्विसप्ततिर्महेशानि निर्वाणशक्तय स्मृता ।
त्रिशतषष्टि देवेशि शाम्भवक्रमरश्मय[3] ॥ १२४ ॥
योगिनीना चतु षष्टिकोटिरुक्ता महेश्वरि ।
षोढान्यासोदिताशेषशक्तयो या प्रकीर्त्तिता ॥ १२५ ॥
प्रतिशक्तौ[4] महेशानि कोटिसख्या प्रकीर्त्तिता ।
तदष्टगुणित कुर्यादष्टक कीर्त्तित मया ॥ १२६ ॥
सर्वत्राष्टगुण कुर्याद्वेदष्टाष्टक क्रमात् ।
शैवाष्टक[5]मिद प्रोक्त शम्भुसाध्य न चान्यथा ॥ १२७ ॥
प्रत्येकमष्टकोटिर्वा कलाकोटिश्च वा[6] प्रिये ।
श्रीविद्याया कनिष्ठ स्यान्निर्वाणे[7] मध्यम भवेत् ॥ १२८ ॥
षट्शाम्भवादिमेधा तदीक्षाया परमेश्वरि ।
उत्तम कथितो देवि क्रमस्त्वष्टाष्टकाभिध ॥ १२९ ॥
अष्टाष्टक वैष्णवाख्य कथ्यते शृणु साम्प्रतम् ।
आवृत्तिशक्तयो देवि त्रिशत[8] षष्टि कीर्तिता ॥ १३० ॥
प्रतिशक्तौ त्वष्टशक्ति पूजयेदन्नत शिवे ।

[1] C °कष° । [2] D °श्च° । [3] D °शक° । [4] N °क्तो ।
[5] D °वपट्क° । [6] D °टीश्वर° । [7] C °ण, C D °णो । [8] D द्वितीयम् ।

द्विसहस्रं चाष्टशती त्वशीतिः शक्तयो मताः ॥ १३१ ॥
प्रत्येकाष्टगुणं चक्रं प्रोक्तमष्टाष्टकं त्विदम् ।
अष्टाष्टकमिदं प्रोक्तं पूर्वमष्टगुणं यदा[1] ॥ १३२ ॥
तदानन्दभैरवाख्यं प्रोक्तमष्टाष्टकं शिवे ।
लक्षद्वयं महेशानि चत्वारिंशत्सहस्रकम् ॥ १३३ ॥
एतद्द्विगुणितं देवि चतुर्लक्षं महेश्वरि ।
षष्टिसाहस्रकं देवि अशीतिः[2] शक्तयो मताः ॥ १३४ ॥
द्विशतं विंशतिरिति त्वानन्दाष्टकमीरितम् ।
चतुर्विंशतिसाहस्रं चत्वारिंशतिशक्तयः ॥ १३५ ॥
आवृतौ तु महेशानि त्रिशतं षष्टिरश्मयः ।
एवमेक पूजनं तु त्वष्टावरणसंयुतम् ॥ १३६ ॥
एकाष्टकमिदं प्रोक्तमेवमष्टा[3]ष्टकं भवेत् ।
द्विसहस्रं चाष्टशतमशीतिः शक्तयो भवेत् ॥ १३७ ॥
अष्टाष्टकमिदं प्रोक्तं पञ्चपञ्चक्रमेण तु ।
पूर्णाभिषेकसंयुक्तस्तूर्ध्वाम्नायप्रदीक्षितः[4] ॥ १३८ ॥
षट्शाम्भवक्रमे देवि कुर्यादष्टाष्टकं क्रमात् ।
अष्टाष्टकस्य विज्ञानी शिव एव न संशयः ॥ १३९ ॥
शिरो देयं धनं देयं देया स्त्रीयंततः शिवे ।
वसुपूर्णं गृहं देयं त्विदं साधनमुत्तमम् ॥ १४० ॥
रहस्यातिरहस्यं हि गोप्याद्गोप्यं महेश्वरि ।
प्रोक्तमेतन्मया देवि किमन्यच्छ्रोतुमिच्छसि ॥ १४१ ॥
एतस्य फलबाहुल्यं मया वक्तुं न शक्यते ।
स्त्रियो देवाः स्त्रियः सृष्टिः स्त्रियः कल्याणकारिणी ॥ १४२ ॥
स्त्रीरूपं तु महेशानि यत्किंचिज्जगतीतले[5] ।

[1] B D पदम् । [2] D अमिताः । [3] D °मेका° । [4] C साम्प्रतः । C D °लम् ।

एका चेत् युवती पूज्या समस्तं जगतीतलम् ॥ १४३ ॥
स्त्रीणां दर्शनमात्रेण जगतीतलपूजनम् ।
कृतं भवति देवेशि नात्र कार्य्या विचारणा ॥ १४४ ॥
रूपं दृष्ट्वा तु प्रणमेद्रूपमानन्दकारकम् ।
रूपानन्दे समायाते किमन्यत्र प्रयोजनम् ॥ १४५ ॥
रूपं रूपं परं धाम रूपं रूपं परं तपः ।
रूपं रूपं परं [1] वस्तु न भूतं न भविष्यति ॥ १४६ ॥
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ।

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे उत्तरकेरले अष्टाष्टकनिरूपणं नाम तृतीयः पटलः ।

[1] B समं ।

## चतुर्थः पटलः ।

### श्रीदेव्युवाच ।

अष्टाष्टकं त्वया प्रोक्तं सर्वसिद्धिकरं भुवि ।
किं सम्प्रदायमार्गेण पात्रज्ञानं च[1] कीर्त्तितम् ॥ १ ॥
तन्मे वद महादेव यद्यहं तव वल्लभा ।

### श्रीशिव उवाच ।

रहस्यं च प्रवक्ष्यामि ज्ञानं संकथ्यते शृणु ॥ २ ॥
केरलश्चैव काश्मीरो गौडमार्गस्तृतीयकः ।
षट्पंचाशद्देशभेदात् सर्वत्र व्याप्य तिष्ठति ॥ ३ ॥
अष्टादशसु देशेषु गौडमार्गः प्रकीर्त्तितः ।
नेपालदेशमारभ्य कलिङ्गान्तं महेश्वरि ॥ ४ ॥
आर्य्यावर्त्तं समारभ्य समुद्रान्तं महेश्वरि ।
केरलाख्यः क्रमः प्रोक्तस्तून[2]विंशतिदेशके ॥ ५ ॥
तदन्यदेशे देवेशि काश्मीराख्यः क्रमः शुभः ।
शंकरस्तु भवेद्वाह्यो वेदबाह्यो द्विजो यथा ॥ ६ ॥
केरलादिक्रमेणैव शृणु पात्रविनिर्णयम् ।
विश्वामित्रकपालं तु केरले परिकीर्त्तितम् ॥ ७ ॥
पात्रं तुम्बीकपालं तु काश्मीराख्यक्रमे भवेत् ।
महाकपालपात्रं च गौडमार्गे प्रकीर्त्तितम् ॥ ८ ॥
कपालं त्रिविधं प्रोक्तं सम्प्रदायक्रमेण च ।
महाकपालं त्रिविधं शंखशुक्तिकपर्द्दिकाः ॥ ९ ॥
कपर्द्दिकाभिधं पात्रं सर्वपात्रोत्तमोत्तमम् ।

[1] B N न, D प्र० । [2] D. ° स्थान ° ।

विज्ञानकेरले देवि शृणु पात्रस्य निर्णयम् ।
शुक्तिपात्रं तु सामान्ये विशेषे नारिकेलजम् ॥ २३ ॥
स्फाटिकं गुरुपात्रं च काचजन्यो घटो भवेत् ।
पात्रं[1] तुम्बी भैरवस्य[2] वीरपात्रं तु शार्करम्[3] ॥ २४ ॥
शक्तिपात्रं तु कापालं योगिन्यां ताम्रजं भवेत् ।
शङ्खजं वीरपात्रं च पाद्यपात्रं च ताम्रजम् ॥ २५ ॥
रौप्यमाचमने प्रोक्तं स्वर्णमर्घ्यादिकर्मसु ।
अथार्घे मधुपर्के च तथैवाचमने शिवे ॥ २६ ॥
स्नानपात्रं रत्नजं स्याद्विज्ञानकेरले शिवे ।
केरले[4] नारिकेलेन सर्वकार्य्याणि साधयेत् ॥ २७ ॥
केवलं[5] वीरपात्रेण सर्वपात्राणि[6] कारयेत् ।
केवल[7] स्वर्णपात्रेण सर्वपात्राणि कारयेत् ॥ २८ ॥
केवलं[8] रौप्यपात्रेण सर्वपात्राणि कारयेत् ।
अथोक्तपात्रमध्ये तु एकेन सर्वकल्पनम् ॥ २९ ॥
एकजातीयपात्रेण सर्वपात्राणि वा शिवे ।
कुर्य्याद्यत्नेन देवेशि सम्प्रदायक्रमेण च ॥ ३० ॥
कांस्यं लोहं तथा रौप्यं सौवर्णं परमेश्वरि ।
स्फाटिकं पारदोत्थं च तथा मारकतं शिवे ॥ ३१ ॥
रत्नवैदूर्य्यजं वापि नवरत्नभवं च वा ।
नारिकेलं महाशङ्खसम्भवं च यथोत्तरम् ॥ ३२ ॥
उत्तरोत्तरतः श्रेष्ठं सर्वसिद्धिप्रदायकम् ।
वृक्षेषु देवदेवेशि सर्वसिद्धिप्रदायकम् ॥ ३३ ॥
वृक्षेषु देवदेवेशि यद्यदा[9]रुभवं शिवे ।

[1] C N यत्र । [2] N ° वाय । [3] D शाक्वरं । [4] D केवलं । [5] B N केरले ।
[6] D N ° वार्याणि । [7] B केरले । [8] B केरले । [9] B ° द्रदा ° ।

श्रीफलोत्थं[1] खड्गजं च यथायोगेन कारयेत् ॥ ३४ ॥
अश्वत्थपत्राकारं वा कुतपाकारमेव च ।
त्रिकोणरूपं यत् पात्रं कुतपः परिकीर्त्तितः ॥ ३५ ॥
योनिरूपं कलाळास्यसन्निभं सुमनोहरम् ।
सुन्दर्य्या रत्नजं पात्रं ताराच्छिन्नाविधौ स्मृतम् ॥ ३६ ॥
दलरूपं महेशानि मत्रमात्रे प्रकीर्त्तितम् ।
अश्वत्थपत्राकारं तु विद्यापञ्चकगोचरम् ॥ ३७ ॥
क्रियानियुक्तं देवेशि त्रित्रिशक्तौ[2] प्रकीर्त्तितम् ।
त्रिशक्तिस्त्रिविधा देवि त्रितय त्रितयं त्रिषु ॥ ३८ ॥
त्रिकोणपात्रं देवेशि मत्रमात्रे प्रकीर्त्तितम् ।
वर्त्तुलं वैष्णवे प्रोक्तं सालम्बा[3] शिवगोचरा ॥ ३९ ॥
यथोक्तपात्राभावे तु विश्वामित्रकपालजम् ।
तदभावे महेशानि तद्रूपं धातुगोचरम् ॥ ४० ॥
कर्त्तव्यं यत्नतो देवि बगलायां च काचजम् ।
वामदक्षक्रमेणैव विपरीतं तथा भवेत् ॥ ४१ ॥
अथवा देवदेवेशि कपालं सर्वगोचरम्[4] ।
यत्र तुम्बीकपालं तु प्रोक्तं कापालिके मते ॥ ४२ ॥
कपालपात्र देवेशि नीलचीन[5]क्रमे मते ।
अथवा देवदेवेशि महापात्रं कपर्दिकम् ॥ ४३ ॥
पात्रमध्ये कपर्दीशस्तत्र तिष्ठति पार्वति ।
त्वरित[6] सिद्धिदानत्वात्[7] पञ्चविद्याविधौ स्मृतम्[8] ॥ ४४ ॥
विश्वामित्रकपालं च ब्राह्मणस्य प्रकीर्त्तितम् ।

[1] D °लं च । [2] B त्रिशिरा° । [3] C सालम्बा, D N शालम्बा, B शालंगा । [4] N महापात्रं कपर्दिकम् । [5] D °चर° । [6] D तत्र° । [7] N °नेन । [8] N शिवे, C श्रमम् ।

तदभावे महेशानि कुल्पपात्रसमं परम् ॥ ४५ ॥
अर्घ्यपात्रं शुभं विद्धि सर्वसिद्धिप्रदं शिवे ।
वर्षाणां तु चतुःषष्टिस्ताम्रा[1]र्घ्ये देवता स्थिता ॥ ४६ ॥
शतं वर्षाणि रौप्ये[2] च सहस्रं स्वर्णपात्रके ।
दशसाहस्रकं देवि स्फाटिके[3] देवता स्थिता ॥ ४७ ॥
तथा मारकते देवि रत्नजे रत्नयुग्मकम् ।
विश्वामित्रकपाले तु लक्षवर्षाणि पार्वति ॥ ४८ ॥
कपालपात्रे देवेशि दशलक्षाणि पार्वति ।
खड्गजं दशसाहस्रं मौक्तिके विंशतिः प्रिये ॥ ४९ ॥
विश्वामित्रकपाले वा कपाले वा महेश्वरि ।
देवता वरदाः सर्वाः स एव परमेश्वरः[4] ॥ ५० ॥
स धन्यः स च विज्ञानी स एव दर्शनी मतः ।
स सर्वयज्ञयाजी[5] च सर्वविद्या[6]रहस्यवित् ॥ ५१ ॥
स ब्रह्मवित् सर्वमंत्ररहस्यरूप एव हि ।
आनन्दात्मा परात्मा सः[7] सकलादिप्रभेदतः ॥ ५२ ॥
विश्वामित्रकपाले वा सर्वपात्राणि कारयेत् ।
कपर्द्या वा महेशानि सर्वपात्राणि कारयेत् ॥ ५३ ॥
एके कपाले देवेशि सर्वपात्राणि भावयेत् ।
विश्वामित्रकपालस्य कपालस्यापि पार्वति ॥ ५४ ॥
शिवशक्त्योर्यथा ज्ञानं नहि कोऽपि विजानते ।
तथा कपालविज्ञानं नहि कोऽपि विजानते ॥ ५५ ॥
कपर्दी च भवेद्यत्तदेव नारिकेलतः ।
पात्रमालां यथा[8] यन्त्रं[9] कारयेत् परमेश्वरि ॥ ५६ ॥

[1] D तम॰। [2] B रौप्य॰। [3] D स्फटिका। [4] B D ॰रि। [5] B ॰जापी, C राजीव। [6] D स च सर्व॰। [7] B परमात्मा, D परात्मानः। [8] B D N तथा। [9] N पर्व।

तृतीयः स्फाटिको देवि सकलो निष्कलो मतः ।
सूर्य्योद्बह्निकरो देवि सकलः परिकीर्त्तितः ॥ ५७ ॥
पूर्वोत्तरप्रभेदेन चापरं सकलं शृणु ।
चन्द्रदर्शनमात्रेण पौर्णमायामथाश्विने ॥ ५८ ॥
सकलः कीर्त्तितो देवि जलस्रावी[1] महोत्तमः ।
कालीं तारां तर्पयेद्धि तेनामृतजलेन च ॥ ५९ ॥
केरलाख्ये सम्प्रदाये नारिकेलार्घ्यपूजनम् ।
काश्मीराख्ये सम्प्रदाये स्फाटिकार्घ्यप्रपूजनम् ॥ ६० ॥
गौडमार्गे महेशानि कपालार्घ्ये प्रपूजनम् ।
काश्मीरगौडयोर्देवि द्रव्यभेदोऽस्ति वै क्वचित् ॥ ६१ ॥
नारिकेलं समादाय सुपक्कं सुन्दरं दृढम् ।
मध्ये स्फोटं समाचर्य्य नेत्रनासासुलक्षणम् ॥ ६२ ॥
नेत्रद्वयं[2] तु संस्थाप्य चारुरूपं गुणोत्तरम् ।
नववर्ण[3]मयं कृत्वा पञ्चवर्णमयं च वा ॥ ६३ ॥
रौप्यनेत्रे स्वर्णनेत्रे नीलरत्नादिनेत्रके[4] ।
समासाद्य महेशानि तत्र नासां समाचरेत् ॥ ६४ ॥
नेत्रयुग्मस्य मध्ये[5] तु मुखं कार्य्यं महेश्वरि ।
ईदृशं सूक्ष्मरूपं च मालार्थे परिकीर्त्तितम् ॥ ६५ ॥
तद्रूपं स्फाटिकोत्थं च काश्मीराख्यमते मतम्[6] ।
त्रिकोणयोनिरूपो वा स्फाटिकः शुभदायकः ॥ ६६ ॥
गौडे कपालं संप्रोक्तं नासायां मुखमाचरेत् ।
ऊर्ध्वाम्नायः केरलः स्यात् काश्मीरः पश्चिमो भवेत् ॥ ६७ ॥
विलासाख्यो वैष्णवाख्यो दक्षिणाम्नाय एव च ।
पूर्वे चैतन्य आख्यातस्तूत्तरे गौड एव च ॥ ६८ ॥

र्वी । [2] C °द्वन्द्वं । [3] D N रत्न° । [4] B °नीलके । [5] D °ध्यं ।
र्मितं ।

विद्यासङ्केतभेदाभ्यां कपाल[1] तारिणी[2]त्रयम् ।
महाशङ्खेऽप्यसक्तश्चेत् स्फाटिक्या मालया जपेत् ॥ ६९ ॥
कपाललाभतो देवि स्फाटिकं कारयेद्ध्रुवम् ।
पात्राणां निर्णयं वक्ष्ये संख्याभेदक्रमेण च ॥ ७० ॥
सम्प्रदायक्रमेणैव पात्राणां स्थापनं शिवे ।
महाकालाकलारम्भवर्णेति वेद भावयेत् ॥ ७१ ॥
सामान्यार्घो भवेदादौ सामान्यार्घो द्विधा[3] स्मृतः ।
सकलो निष्कलश्चैव सकलो द्वा[4]रपूजनात् ॥ ७२ ॥
निष्कलः केवलो यश्च निष्कल सर्वगोचरः ।
सामान्यार्घ्यद्वय देवि घटश्चैव तृतीयकः ॥ ७३ ॥
विशेषार्घ्यश्चतुर्थः स्याद्गुरुपात्रं तु पञ्चमम् ।
दिव्यौघाख्यं च संप्रोक्तं सिद्धौघाख्यं रसाभिधम् ॥ ७४ ॥
मानवौघाभिधं देवि सप्तमं परिकीर्त्तितम् ।
गुरुपात्रं ततः प्रोक्तं भैरवाख्यं च रन्ध्र[5]कम् ॥ ७५ ॥
शक्तिपात्रं च दशमं वीरपात्रं शिवा[6]भिधम् ।
ततः श्रीयोगिनीपात्रं सूर्य्यसंख्याभिधं भवेत् ॥ ७६ ॥
नव वै बलिपात्राणि सकलादिप्रभेदतः ।
बल्यर्पणाभिधं पात्रं सकलं परिकीर्त्तितम् ॥ ७७ ॥
निष्कलानि महेशानि बटुकादीनि सिद्धयः ।
बटुको योगिनीक्षेत्रं गणपाः परमेश्वरि ॥ ७८ ॥
सर्वभूतानि देवेशि ताराक्षोभ्यस्तथैव च ।
पाद्यत्रयं तथा देवि प्रोक्तमाचमनीयकम् ॥ ७९ ॥
अर्घ्यपात्रत्रयं देवि मधुपर्के त्रयं भवेत् ।

[1] B स्थलं । [2] D भर्त्रिकं° । [3] B °मान्यो द्विविध, D °मान्यर्दिविधो ।
[4] C D द्वा° । [5] D षद्° । [6] D °त° ।

पञ्चामृते पञ्चक च स्नानार्थं गुणसख्यकम् ॥ ८० ॥
ततस्तु प्रोक्षणीपात्र करक्षालनज तत ।
गन्धपात्र पुष्पपात्र ततो नैवेद्यपात्रकम् ॥ ८१ ॥
शुद्धोदकाभिध पात्र भो[1]गात्मपात्रक तत ।
तत पाच[2]कपात्र तु ततो नीराजनादिकम् ॥ ८२ ॥
स्थानीयपीठपात्र च दीपपात्रचतुष्टयम् ।
घृततैले दक्षवामे सौगन्ध्यम[3]दने तथा ॥ ८३ ॥
पात्राणा च चतु षष्टि सख्या प्रोक्ता तु केरले ।
काश्मीरे पीठमेव[4] स्यात् कलासख्यानि वै शृणु ॥ ८४ ॥
दिव्योत्तमोत्तमौ प्रोक्तौ सद्य सिद्धिकरौ परौ ।
अथ षोडशपात्राणि शृणुष्व[5] परमेश्वरि ॥ ८५ ॥
सामान्यार्घ्यं विशेषार्घ्यं श्रीपीठ[6] गुरुपात्रकम् ।
भैरवाख्य पञ्चम तु वीरपात्र रसाभिधम् ॥ ८६ ॥
शक्तिपात्र योगिनीं च बलिपात्रे[7] तथैव च ।
[8]आचमनीयाख्यपात्र चार्घ्यपात्र तथैव च ॥ ८७ ॥
मधुपर्काभिध पात्र पञ्चामृतमनन्तरम् ।
स्नानपात्र हस्तशुद्धिपात्र च प्रोक्षणीं तथा ॥ ८८ ॥
पात्र षोडशक प्रोक्त केरले पश्चिमेऽपि च ।
मधुपर्कोत्तरं देवि शङ्केति कौलिकेऽपि च ॥ ८९ ॥
चिदानन्दसम्प्रदाये शृणु पात्राणि पार्वति ।
सामान्य च विशेष च कलश गुरुपात्रकम् ॥ ९० ॥
भोगपात्र शक्तिपात्र योगिनीवीरपात्रके ।
बलिपाद्याचमनीय च अर्घ्यस्ना[9]भिध प्रिये ॥ ९१ ॥

[1] D भा॰। [2] D पीठ॰, [ याच ]। [3] D न्यामो॰। [4] D ॰मान। [5] D त्व। [6] C ॰खण्डो, N ॰षद्रो, D ॰पात्र। [7] N ॰य। [8] This line appears only in N [9] D ॰स्तारा॰।

देवीशङ्खेति देवेशि पात्राण्येवं तु षोडश ।
अथवा कलशं शङ्खं शक्तिपात्रत्रयं भवेत् ॥ ९२ ॥
श्रीगुरुभोगपात्राणि त्रिषु पात्रेष्वयं विधिः ।
आन[1]न्दाख्ये[2] मते देवि पात्राणि कीर्तितानि च ॥ ९३ ॥
सामान्यार्घ्यो विशेषार्घ्यो घटः श्रीगुरुभोजनात् ।
शक्तिपात्रं योगिनी च वीरपात्रं बलिस्तथा ॥ ९४ ॥
पाद्यमाचमनीयं च भोगचाराभिधे भवेत् ।
देवीपात्रं श्रीगुरुश्च भोगश्च योगिनी तथा ॥ ९५ ॥
बलिपात्रं शक्तिपात्रं वीरपात्रं[3] तथैव च ।
तथाचमनपात्रं च चिदानन्देष्वयं विधिः ॥ ९६ ॥
देवीगुरुभोगपात्रं योगिनीत्रज[4]शक्तिजम् ।
सिद्धचैतन्यमार्गस्य पात्राणि परमेश्वरि ॥ ९७ ॥
योगिनीवीरपाद्यादि पंचचक्रमते भवेत् ।
आनन्दवीरदेवस्य क्रमः प्रोक्तो महेश्वरि ॥ ९८ ॥
सामान्यार्घ्यो विशेषार्घ्यः कलशो गुरुभैरवः ।
एते[5] सर्वादौ संप्रोक्ताः सामान्यपरिभाषया ॥ ९९ ॥
बलिः पाद्याचमनीये च अर्घ्येति नव पार्वति ।
पंचमानन्दनाथस्य मार्गः प्रोक्तो मया तव ॥ १०० ॥
पंचमं भोगशक्ती च विश्वरूपाभिधे[6] भवेत् ।
देवीगुरुभोगशक्तियोगिनीवीरपात्रकम् ॥ १०१ ॥
बलिः पाद्याचमनीये च अर्घ्येति योगरूपजे ।
सृष्टिसंहारमार्गेण परिवर्त[7]क्रमेण च ॥ १०२ ॥
ओड्यानं[8] चतुरस्रं च कामरूपं च वर्तुलम् ।

[1] B C N न° । [2] B C N add तु । [3] B °दे । [4] B °वलि°, C D °वर्ण° । [5] B इति । [6] B °पवित्रौ । [7] B °र्त° [8] D डड्यानं, वड्यानं ।

जालन्धरं त्वर्धचन्द्र त्र्यस्र पूर्णगिरिर्भवेत् ॥ १०३ ॥
शङ्खमत्र[1]भोगपूजानलिपात्राणि पच च ।
स्वदक्षिणादिवामान्त सस्थाप्य पूजयेच्छिवाम् ॥ १०४ ॥
**कुलनाथ**मत प्रोक्त भैरवस्य मत शृणु ।
स्ववामभागे देवेशि अर्घ्यादिस्थापनक्रियाम्[2] ॥ १०५ ॥
पाद्यार्घ्याचमनीयानि सामान्या र्यविशेषकम् ।
सामान्यार्घघटो देवि श्रीपात्र देवतात्मक[3] ॥ १०६ ॥
स्ववामे कलशस्याङ्के मधुपर्को महेश्वरि ।
तद्दक्षिण आचमनीय पाद्य यत्नेन सचरेत् ॥ १०७ ॥
**निवापा**[4]ख्यमत प्रोक्त सक्षेपेण महेश्वरि ।
अथ वक्ष्यामि देवेशि **शम्भुनाथ**मत शृणु ॥ १०८ ॥
आदौ कुम्भ तथा शङ्ख श्रीपात्र शक्तिपात्रकम् ।
गुरुपात्र भोगपात्र बलिपाद्यादिपात्रकम् ॥ १०९ ॥
योगिनीवीर[5]पात्र च वामावर्तक्रमेण च ।
सामान्यार्घ्यघट चैव श्रीपात्र तदनन्तरम् ॥ ११० ॥
श्रीपात्रघटयोर्मध्ये सर्वपात्राणि पातयेत् ।
गुरुपात्र घटस्यान्ते तदन्ते भोगपात्रकम् ॥ १११ ॥
तदन्ते शक्तिपात्र च योगिनीना तु पात्रकम् ।
तदन्ते वीरपात्र च तदन्ते बलिपात्रकम् ॥ ११२ ॥
पाद्य चाचमनीयञ्च तदन्ते चार्घ्यपात्रकम् ।
पुनराचमनीय च मधुपर्कस्तथैव च ॥ ११३ ॥
स्नानीय प्रोक्षणी चेति काश्मीराख्ये यथाभिधा ।
करक्षालनज चैव तथा पञ्चामृतेति च ॥ ११४ ॥
तदाष्टादश पात्राणि काश्मीराख्यमते शिवे ।

[1] D ॰ मार्गो । [2] C ॰ क्र्यी । [3] D ॰ त्मके । [4] B C N ॰ सा ॰ ।
[5] C N रत ॰ ।

सामान्यार्घ्यविशेषार्घ्यौ श्रीघटः परमेश्वरि ॥ ११५ ॥
घटान्ते गुरुपात्रं च तदन्ते भैरवाभिधम् ।
शक्तिपात्रं ततः[1] प्रोक्तं वीरपात्रं ततः शिवे ॥ ११६ ॥
बलिपात्र योगिनी च पान[2]पात्र तथैव च ।
भोगपात्र च देवेशि नव पात्राणि पार्वति ॥ ११७ ॥
पाद्यादीनि महेशानि सामान्यत्वेन पश्चिमे ।
तद्दक्षिणे पाद्यपात्रम र्घ्यमाचमनीयकम् ॥ ११८ ॥
प्रोक्षणीति महेशानि स्थापयेदाद्यवत् शिवे ।
गुरुपात्रं तत्पदाम्या भैरवं बटुकेन च ॥ ११९ ॥
शक्तिपात्रं भुवनेश्या वीरपात्र शिवेन च ।
बलिपात्र गणेशाद्यैर्योगिन्या तन्मनु[3]र्भवेत् ॥ १२० ॥
अन्यानि प्रणवेनैव सर्वपात्रेष्वयं विधिः ।
विशेषार्घ्येण दिव्यौघान् गुरुपात्रे गुरून् यजेत्[3] ॥ १२१ ॥
पुरुष भैरवेणैव श्रीपात्रेणाऽमृतेश्वरि[4] ।
मूलदेवीपदे देवी प्रोक्ता तु मूलशारदा ॥ १२२ ॥
आनन्दभैरव देवं भैरवेन प्रतर्पयेत् ।
बलिना तु गणेशादीन् योगिन्या योगिनीं शिवे ॥ १२३ ॥
हृदि देवीं विशेषेण श्रीपात्रेण तु सावृतिम् ।
विशेषेण हृदा प्रोक्त प्रोत्सर्गः[5] श्रीजलेन च ॥ १२४ ॥
अन्येषा चैव सामान्यपात्रेण परमेश्वरि ।
वीरपात्रेण लोकेशा. शक्त्या ब्राह्म्यादिमातरः ॥ १२५ ॥
विशेषपात्राद्या[6] पूजा सा पूजा[7] सर्वोत्तमा ।
प्रत्यावृत्तौ महेशानि देवताभ्यो निवेदनम् ॥ १२६ ॥

[1] B C N °चात्म° । [2] D नो° । [3] B D तन, N जपेन् । [4] B D °ण महेश्वरि । [5] B D सर्वेषां, C सद्य । [6] D ° न्द्यो । [7] D सर्वत्र ।

प्राणायामप्रमाण च[1] षडङ्गध्यानके तत ।
पुनरावरणं पूज्य पञ्च षोडश वै दश ॥ १२७ ॥
जप कृत्वा सन्निवेद्य प्राणायामादिपूर्वकम् ।
पुनरावरण पूज्य प्रोक्तमावरणक्रम ॥ १२८ ॥
एव क्रमेण देवेशि सर्वावृर्ति प्रपूजयेत् ।
प्रत्यावृत्तौ प्रोक्तमुद्रा दर्शयेद्विधिपूर्वकम् ॥ १२९ ॥
अनुक्तमुद्रावरणे तदायुधमयी भवेत् ।
सघट्टना योनिमुद्रा खेचरी च तदायुधा ॥ १३० ॥
यदावरणसक्षेपस्तदावरणमयी च सा ।
विस्तारश्चेत् महेशानि सघट्टायास्तदन्तका १३१ ॥
पुन पुष्पाञ्जलिं दत्त्वा सायुधेति सवाहना ।
सशक्ती च[2] समुद्रा च ससिद्धी च समुच्चरेत् ॥ १३२ ॥
सम्प्रदायत्रयेऽपि स्यात्काण्डानुममयो ह्ययम् ।
सामान्यार्घ्यघटे देवि विशेषार्घ्यस्तृतीयक ॥ १३३ ॥
पात्रत्रयक्रमेणैव पूजन वा भवेत् शिवे ।
सामान्य च विशेष च श्रीघटश्च तृतीयक ॥ १३४ ॥
केवल तु विशेषेण पूजन तु[3] महेश्वरि ।
गौडमार्गे महेशानि पात्राणा निर्णय शृणु ॥ १३५ ॥
सामान्य द्वितय देवि द्वार[4]देशान्तमार्गत ।
देवाग्रे तु विशेषार्घ्यो घटान्ते गुरुपात्रकम् ॥ १३६ ॥
श्रीपात्रसज्ञा देवेशि विशेषार्घ्ये प्रकीर्त्तिता ।
भोगपात्र ततो देवि शक्तिपात्र तत शिवे ॥ १३७ ॥
योगिनीवीरपात्रे तु[5] बलिपात्र[6] तत शिवे ।

[1] B C D म समाचर्म्य । [2] B D N °क्तिक । [3] C या । [4] B विहार° । [5] C °धु । [6] D N °वे ।

आचमनीयं महेशानि प्रोक्तमन्यद्विशेषतः ॥ १३८ ॥
अर्घ्यत्रयं गुरोः पात्रं भैरवीपात्रकं ततः ।
शक्तिपात्रं योगिनी च बलिपात्रं ततः शिवे ॥ १३९ ॥
अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत् ।
आचमने[1] त्रयं देवि मधुपर्क[2]स्ततः शिवे ॥ १४० ॥
स्नानीयं करशुद्धिश्च यजु[3]र्गेहे विधिः स्मृतः ।
स्वदक्षे प्रोक्षणीपात्रं आदायाद्भिः प्रपूरयेत् ॥ १४१ ॥
किंचिदर्घ्याम्बु[4] संगृह्य प्रोक्षण्य[5]म्भसि योजयेत् ।
ततः साधारकं पात्रं पुरतः स्थापयेद्बुधः ॥ १४२ ॥
तत्पार्श्वे पाद्यदानं च तत्पार्श्वे चार्घ्यदानकम् ।
आचमनीयं च तत्पार्श्वे वामे तु मधुपर्ककम् ॥ १४३ ॥
पुनराचमनीयं च स्नानीयं तत् क्रमान्न्यसे[6]त् ॥
गन्धपुष्पं तथा दक्षे पृष्ठे तु[7] करक्षालनम् ॥ १४४ ॥
स्ववामे स्थापयेत् कुम्भं वामहस्तेन धारयेत् ।
" ॐ आँ " इति च मंत्रेण पार्श्वे धृत्वा च तज्जलम् ॥ १४५ ॥
" नु[8]क्षौर " इति मंत्रेण देवतीर्थेन संस्पृशेत् ।
आ[9]त्मानं यागवस्तूनि गन्धपुष्पादिकानि च ॥ १४६ ॥
प्रोक्षयेत्[10] प्रोक्षणीतोयैर्गायत्र्या मूलमन्त्रतः ।
साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ॥ १४७ ॥
द्वादशाङ्गुलमूर्द्धं च अधोभागे तथाङ्गुलम् ।
द्वादशाङ्गुलमध्यस्य तत्र संस्थापयेद्बुधः ॥ १४८ ॥
आत्मनः पुरतो वामे त्रिकोणं विलिखेद्भुवि ।
सार्धद्वादश वै देवि चार्घ्या[11]र्थं द्वादश प्रिये ॥ १४९ ॥

[1] C D N °नीये । [2] B °र्कं तथा । [3] D यद् यद्, B N पंच° । [4] D र्घ्येषु, N र्घ्यांशु° । [5] D °क्कान्य° । [6] C न्यजे° । [7] D वा । [8] B D न । [9] D स्वा° । [10] N °णे । [11] B E °र्घ्ये ।

आराध[1]नं स्थापनं च पूजनं पूरणं तथा ।
गन्धपुष्पे मण्डल[2]स्य विन्यासः पुष्पसंश्रयः ॥ १५० ॥
अमृतीकरणं पात्रं प्रतिपत्तिरियन्नव ।
सामगौडे विधिरयं संक्षेपेण प्रकाशितः[3] ॥ १५१ ॥
पात्राणा विंशतिः शिवे सामगौडे विधिः शिवे ।
आद्यत्रयं गुरुर्भोगः शक्तिश्च योगिनी शिवे ॥ १५२ ॥
वीरपात्रं बलिपात्रं पाद्यार्घ्याचमनीयकम् ।
करक्षालनपात्रं च मूलानां च प्रवर्तकम् ॥ १५३ ॥
सामान्यार्घ्यादाचमान्तमर्घ्यं च करशुद्धिजम् ।
उच्छिष्टबलिपात्रं च बलिपात्राणि सप्त च[4] ॥ १५४ ॥
अथ पाचक[5]पात्रं च क्रूरगौडे विधिः शिवे[6] ।
एकविंशतिपात्राणि गौडे चैवात्र सन्ति च ॥ १५५ ॥
शाक्ते प्रोक्तमिदं देवि वीरशाक्ते तु शङ्करि[7] ।
शङ्खं न मुख्यं[8] देवेशि शैवे शाक्ते न कारयेत् ॥ १५६ ॥
लोक[9]सन्दर्शनार्थं[10]तु शङ्खस्य स्थापनं चरेत् ।
शैवे पङ्क्तिक्रमेणैव पात्राणां स्थापनं चरेत् ॥ १५७ ॥
सामान्यार्घ्यो विशेषश्च घटश्च पाद्यपात्रकः ।
आचमनीयं तथार्घ्यं च पुनराचमनीयकम् ॥ १५८ ॥
मधुपर्कामृते देवि स्नानीयं प्रोक्षणी तथा ।
शक्तियुक्तो यदा शम्भुस्तदा कलशपूजनम् ॥ १५९ ॥
नो चेत्तु जलवत्[11] स्थाप्य पूज्यो वैदिककर्मणा ।
पूर्णदीक्षाप्रयुक्तश्चेच्छक्तिपात्रादिक चरेत् ॥ १६० ॥

[1] D °त्राह° । [2] D °प° । [3] D शिता, C °शते । [4] B °त्रं च सप्तम । [5] B याच°, N पाव° । [6] C स्मृत. । [7] B सङ्करी, D N °रम । [8] D शून्यो । [9] D °के । [10] B °सन्देशार्थं । [11] B °मव° ।

विल्वपात्रेण देवेशि विश्वामित्रेण वाचरेत् ।
वैष्णवे तु महेशानि पुरः सामान्यपात्रकम् ॥ १६१ ॥
शङ्खपात्रं वामभागे स्वस्य देव[1]स्य पार्वति ।
पूजाद्रव्यं दक्षभागे तन्मध्ये परमेश्वरम् ॥ १६२ ॥
वैष्णवे देवदक्षे तु शङ्खं तद्दिक्षु पार्वति ।
पाद्यार्घ्याचमनीयं च मधुपर्कं क्रमाद्भवेत् ॥ १६३ ॥
तदुदकपट्पात्रं च जलसंस्थापनाय च ।
सिद्ध[2]कल्पितदिङ्मार्गाद्वामदक्षे घटो भवेत् ॥ १६४ ॥
शक्तियुक्तवैष्णवस्य प्रोक्तमेतन्मया तव ।
अयुक्तस्य महेशानि न सामान्यघटो भवेत् ॥ १६५ ॥
विशेषदीक्षितश्चेत्स्याच्छक्तिर्वारादि कारयेत्[3] ।
शैवे[5]ऽपि स्वस्य दक्षात्तु सामान्यात्प्रोक्षणीति च ॥ १६६ ॥
तदन्ते स्थापयेद्देवि सौरे[4] शृणु महेश्वरि ।
सौरे गौडे च सामान्याद्द्वावर्घ्यौ[6] सूर्यगोचरौ ॥ १६७ ॥
विशेषात् प्रोक्षण्यन्तं च स्थापयेत्परमेश्वरि ।
जैने बौद्धे तु तारावद्भैरवे कालिकाविधिः ॥ १६८ ॥
दर्शनायतने देवि विशेषार्घ्यवटादिकम् ।
प्रोक्षण्यंतं समासाद्य केरलादिक्रमेण च ॥ १६९ ॥
गणेशे चोमयं देवि शङ्खस्त्वाचमने भवेत् ।
सामान्यार्घ्ये मनेद्वारि सामान्यं च विशेषकम् ॥ १७० ॥
श्रीपात्रमिति देवेशि चार्घ्यं स्वायंभुवेऽपि च ।
गणेशवत्प्रकर्तव्यं नान्यथा शाङ्करं वचः ॥ १७१ ॥
सर्वत्र शक्तियो[7]गश्च शाक[8]वत्[9] परमेश्वरि ।

[1] D धर्म° । [2] D °द्दि° । [3] C °रो हि कारयेत्, B D °वीरौ यजेच्छिवे ।
[4] D सौरे° । [5] B शैवे । [6] B °द्वौराध्यौं, C N द्वाराध्यौं । [7] C च° ।
[8] B D शक्ति° । [9] D °युक् ।

वामावर्त्तक्रमेणैव गौडे कौले तु पात्रकम्[1] ॥ १७२ ॥
काश्मीरे दक्षवदने केरले मण्डल[2]क्रमात् ।
केवलं शङ्खमात्रेण केरले चरितार्थता ॥ १७३ ॥
पूजोपकरणं दक्षे पृष्ठे नैवेद्यमेव च ।
करक्षालनपात्रं तु स्वपृष्ठे परिकीर्त्तितम् ॥ १७४ ॥
घृतदीपो भवेद्दक्षे तैलदीपो हि वामतः ।
त्रिकोणाकारतो वापि वह्निचक्रक्रमेण च ॥ १७५ ॥
मेधादीक्षाविधौ देवि स्थापनं परिकीर्त्तितम् ।
सर्वपात्राणि संस्थाप्य स्ववामे तु घटोत्तरे ॥ १७६ ॥
घटस्य तु मुखं देवि परितः परिकीर्त्तितम् ।
शङ्खस्य देवी शङ्खस्य मुखे तु देवताग्रतः ॥ १७७ ॥
"पूजयामि तर्पयामि नमो"ऽन्तं केरले मतम्[3] ।
"तर्पयामि पूजयामि नमः" काश्मीरगोचरः ॥ १७८ ॥
हृदयस्यास्य योगे तु साम्राट्केरल ईरितः ।
"पूजयामि नमो देवि तर्पयामि नम"स्तथा ॥ १७९ ॥
आदिकेरलसाम्राज्ये[4] महत्पूर्वादि कीर्त्तितम् ।
नमः पूजा तर्पणे तु केरले परमेश्वरि ॥ १८० ॥
पूर्णानन्दश्चिदानन्दो बोधानन्दः प्रकीर्त्तितः ।
अष्टौ भेदा महेशानि हृदाद्यन्तप्रयोगतः ॥ १८१ ॥
मध्य[5]योगादपि शिवे सभेदा[6] परिकीर्त्तिताः ।
आदौ मध्ये तथा चान्ते बलिदानं तु गौडके ॥ १८२ ॥
आदौ च बलिदानं च काश्मीरे परिकीर्त्तितम् ।
अन्ते बलिः केरले तु केवलं तर्पणं यदि ॥ १८३ ॥

[1] B °कः । [2] D °लमुत्तर° । [3] B N चमे । [4] C N ° ज्यं ।
[5] C D मद्य° । [6] B शु°, D स्त° ।

विला[1]साख्यस्तदा देवि पूजनं तर्पणं च वा ।
विश्वरूप[2]विधौ देवि केरले पूजने सति ॥ १८४ ॥
श्रीपूर्वा[3] पादुका वापि केवलापादुकापि वा ।
तद्देवतातर्पणं वा ह्रस्वं दीर्घं च वा प्रिये ॥ १८५ ॥
सबिन्दुं वा महेशानि संपूर्णं वा समाचरेत् ।
चीनमार्गेऽपि तारिण्यां मंजुघोषेऽपि पार्वति ॥ १८६ ॥
''यज्ञपुष्पं प्रतीच्छे''ति स्वाहान्तेन प्रपूजनम् ।
वामावर्त्तक्रमेणैव दक्षवामक्रमेण च ॥ १८७ ॥
केवलं दक्षावर्त्तेन केवलं वामहस्ततः ।
भेदाष्टत्रि[4]शतिः शिवे कीर्त्तितः परमेश्वरि ॥ १८८ ॥
केवलानन्दयोगेन केवलानन्दयोगतः ।
आनन्दनाथयोगेन नाथानन्दक्रमेण च ॥ १८९ ॥
सिद्धमानव[5]दिव्यादिप्रज्ञाचैतन्यबोधतः ।
विलास[6]क्रमयोगेन तथा सरस्वतीक्रमात् ॥ १९० ॥
वक्ष्यमाणक्रमेणैव भेदवाहुल्यमीरितम् ।
इति संक्षेपतः प्रोक्तं विशेषः कथ्यते प्रिये ॥ १९१ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यतारासंवादे पात्रनिर्णयकथनं नाम चतुर्थः पटलः ॥ ४ ॥

[1] D °ना°। [2] CN °पूजा°। [3] DN °र्वं°। [4] BDN °श्च°। [5] N °व्योम च। [6] D °नाथ°।

छन्दो ज्योतिर्वैद्यकादि[1] विद्या एताश्चतुर्दश ।
प्रपञ्चार्थं मया प्रोक्तमेकत्वं परिणामजे ॥ २१ ॥
प्रकृतं कथ्यते देवि शृणु सावहिता भव ।
चतुर्वेदेश्वरी[2] प्रोक्ता श्रीमहाभवतारिणी ॥ २२ ॥
अथर्ववेदाधिष्ठात्री श्रीमहाकालिका परा ।
विना काली विना तारां नाथर्वणविधि क्वचित् ॥ २३ ॥
केरले कालिका प्रोक्ता काश्मीरे त्रिपुरा मता ।
गौडे तारेति संप्रोक्ता सैव लोकोत्तरा[3] भवेत् ॥ २४ ॥
हादौ त्रितयमेतद्धि संक्षेपेण प्रकीर्त्तितम् ।
अथ कादौ केरले तु त्रिपुरा सा प्रकीर्त्तिता ॥ २५ ॥
काश्मीरे तारिणी बाला गौडे काली प्रकीर्त्तिता ।
शिवदेवी परा जाता दक्षिणामूर्त्तिभेदत. ॥ २६ ॥
अथानन्दभैरवाख्यमतभेदेन पार्वति ।
देवीसकाशाद्या प्राप्ता स्वगुर्वन्तं तु शक्तित ॥ २७ ॥
शक्तेः परम्परा या तु न विच्छिन्ना महेश्वरि ।
तन्नामाज्ञाक्रमेणैव ज्ञेया देवी परंपरा ॥ २८ ॥
शम्भोः सकाशाद्या प्राप्ता स्वगुर्वन्त महेश्वरि ।
तन्नामाज्ञाक्रमेणैव सा शिवस्य[4] परपरा ॥ २९ ॥
दक्षिणामूर्त्तितो देवि स्वगुर्वन्तक्रमेण च ।
तन्नामाज्ञाक्रमेणैव सा वै तस्य परंपरा ॥ ३० ॥
अविच्छिन्ना यदा सा वै चतु शङ्कर[5]योगत ।
तदान्य सम्प्रदायो हि भविष्यति महेश्वरि ॥ ३१ ॥
केरलश्चैव काश्मीरो गौडश्चैव तृतीयक ।

[1] D वेदशास्त्रा । [2] D त्रयी । [3] C तदा । [4] B तु तस्य, D °थकस्य ।
[5] B संस्कार° ।

चतुर्णामपि देवेशि त्रितय तिष्ठति[1] प्रिये ॥ ३२ ॥
"गृह्णामि च प्रगृह्णीयात्"[2] निवासे पानकर्म्म च ।
"जुहोमि च जुपस्वे"ति[3] केरले पानकर्म्म च ॥ ३३ ॥
"होष्यामि प्रजुपस्वे"ति काश्मीरे पानमीरितम् ।
सदा मत्तो भवेन्नाथो निवासिन्नादिपानत ॥ ३४ ॥
अनुक्रमेण त्रितये पूजानन्दी यदा नर ।
नन्दनाथी च सप्रोक्तस्तद्रूपो यस्तु मानव ॥ ३५ ॥
महानन्दामिध प्रोक्तो गौडे पानक्रम शृणु ।
वामहस्तात् पानपूजा क्रमाद्वामी प्रकीर्त्तित ॥ ३६ ॥
दक्षहस्तात् पानयोगाद्वामहस्तप्रतर्पणात् ।
दक्षहस्तात्पूजनाद्धि कौल इत्यभिधीयते ॥ ३७ ॥
केवल दक्षहस्तेन पूजनाद्दक्षिणाभिध ।
स एव केरल प्रोक्त शुद्धमार्ग प्रकीर्त्तित ॥ ३८ ॥
दक्षिणामूर्त्तिभेदे तु[4] दिव्यौघादित्रय भवेत् ।
तद्भेदेन त्रिभेदत्व प्रत्येक नवभेदता[5] ॥ ३९ ॥
आनन्दभैरवमते पञ्चाशीतिगुरुक्रम[6] ।
दिव्यसिद्धमानवादि पञ्चाशीति प्रकीर्त्तित ॥ ४० ॥
प्रत्येक त्रितयत्वेन सप्तसमक्रमेण[7] तु ।
पचषष्टी तु सप्रोक्ता नामाज्ञा तत्क्रमेण च ॥ ४१ ॥
नवनाथक्रमेणैव नव भेदा भवन्ति च ।
चतुरशीतिसिद्धानां क्रमदीक्षाप्रभेदत ॥ ४२ ॥
चतुरशीतिभेदाश्च तन्नामाज्ञाक्रमेण च ।
ऋण धन च निनाय नामाज्ञा दापयेद्गुरु ॥ ४३ ॥

[1] D त्रितय। [2] B C N °ग्रहामि। [3] D °जुहुता नेति। [4] B N °न। [5] D भवेत्सदा। [6] N °मे। [7] C °क्रमेण।

दिव्यसिद्धमानवे तु फलं च उत्तरोत्तरम् ।

श्रीदेव्युवाच ।

नामदानं कथं कार्यं दर्शनेष्वपि पट्स्वपि ॥ ६७ ॥
पडाम्नायेषु देवेश तथा शाम्भवयुग्मके ।
पञ्चाम्नाये तथा वेदाम्नाये च परमेश्वर ॥ ६८ ॥
मेधासाम्राज्यदिव्यान्तःसाम्राज्येन महेश्वर ।
नामदानं कथं कार्यं तन्मे कथय शङ्कर ॥ ६९ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्यं तु त्वया संपृच्छ्यते शिवे ।
अहं जानामि सा काली तारा जानाति नेतरा. ॥ ७० ॥
ओघा:[1] किंचिच्च जानन्ति तत्रापि दिव्यरूपिणः ।
सर्वथा गोप्यतां देवि न वाच्यं यस्य कस्यचित् ॥ ७१ ॥
पट्चक्रं तत्र संप्रोक्तं चतुःसंज्ञाविधायकम् ।
प्रथमे वर्णवेधोऽस्ति स्वरवेधो द्वितीयके ॥ ७२ ॥
तृतीये शून्यवेधोऽस्ति चतुर्थे कूटवेधता ।
पञ्चमे गणवेधोऽस्ति पष्ठे चक्रेण किंचन ॥ ७३ ॥
पट्चक्राणि महेशानि चक्राण्यन्यान्यपि प्रिये ।
अन्यानि पञ्चचक्राणि एवं रुद्रविधानि च ॥ ७४ ॥
तत्र पट्चक्रमध्ये तु साध्य[2]सिद्धं सुसिद्धकम् ।
दैवतं च पराख्यं[3] च देवतादर्शनाभिधम् ॥ ७५ ॥
देवतादर्शनाख्येन नाम दद्यान्महेश्वरि ।
ओघत्रयस्थं[4] यन्नाम साधकस्य तथैव च ॥ ७६ ॥

[1] B C आद्याः । [2] D N °ध्यं । [3] C °रोक्तं । [4] C °स्थं ।

प्रसिद्धं नाम गृह्णीयात् प्रसुप्तो[1] येन जागृयात् ।
नामाद्यक्षरमारभ्य यावन्मंत्रादिमाक्षरम् ॥ ७७ ॥
त्रिगुणीकृत्य देवेशि स्वरव्यञ्जनभेदतः ।
मातृकागणनान्वेन यावदङ्को[2] भवेच्छिवे ॥ ७८ ॥
एकीकृत्य साधकार्णे मिश्रितं सप्तधा[3] हरेत्[4] ।
नामराशिरियं प्रोक्ता मंत्रराशिरतोऽन्यथा ॥ ७९ ॥
ऋणिनामप्रदेयं च सुन्दरं सुमनोहरम् ।
दिव्यौघनाम भाग्येन गुरुणा दीयते यदि ॥ ८० ॥
सिद्धौघनाम देवेशि भाग्येन सिद्धिकारकम् ।
मानवौघाभिधं नाम ऋणी भाग्येन लभ्यते ॥ ८१ ॥
गुरुणालोकितः शिष्यः शिष्येणालोकितो गुरुः ।
ऋणिनामप्रदानेन मंत्रदोषनिवृत्तता ॥ ८२ ॥
पूर्णाभिषेकदीक्षायां नाम चैव प्रदापयेत् ।
मेधादीक्षादिसाम्राज्यदिव्यसाम्राज्यगोचरम् ॥ ८३ ॥
नाम देयं महेशानि सुन्दरं कल्पितं च वा ।
आदौ प्रसिद्धनाम स्यादलाभे कल्पितं च वा ॥ ८४ ॥
मंत्रारूढं च वा नाम विद्याढ्यं वा महेश्वरि ।
अन्यत्तदिनऋक्षात्तमुदयार्णक्रमेण च ॥ ८५ ॥
अथोदयार्णनित्यार्क्कं कालनित्याक्रमेण च ।
प्रोक्तं तद्युगनित्यार्क्कं वर्षनित्याक्रमेण च ॥ ८६ ॥
तदावरणनित्यार्क्कं संप्रदायक्रमेण च ।
काश्मीराख्ये सम्प्रदाये तद्विद्यामंत्रकल्पितम् ॥ ८७ ॥
गौडे कालान्तकं[5] नाम केरले सर्वगोचरम् ।
परस्पर विशोध्याथ नाम दद्यान्महेश्वरि ॥ ८८ ॥

[1] C सुप्तो च । [2] C °दे° । [3] B °वंधा । [4] N भवेत् । [5] D कल्पितं ।

नाथा[1]क्त चाथ सिद्धा[2]क्त पूर्वपञ्चकयोगत. ।
यद्देव तु ऋणी भूयात्तदेव परनामकम् ॥ ८९ ॥
औघत्रयं महेशानि चोत्तरोत्तरसिद्धिदम् ।
दिव्यौघे चेत्समायाति दिव्यरूप स जायते ॥ ९० ॥
सिद्धौघे चेत्समायाति सिद्ध[3]रूपमुसिद्धिदः ।
मानवौघे पितॄरेश· शाक्त[4]शास्त्रे त्विदं भवेत् ॥ ९१ ॥

श्रीदेव्युवाच ।

शाक्तास्ये तु महादेव कथ नाम प्रदीयते ।

श्रीशिव उवाच ।

वैष्णवे गाणपत्ये च शैवे स्वायम्भुवे तथा ॥ ९२ ॥
चान्द्रे पाशुपते चीने जैने कालमुखेऽपि च ।
वैदिकेऽपि महेशानि तदावरणगं च या[5] ॥ ९३ ॥
तत्पर्यापनाम देयं द्वारादुत्तरतस्तथा ।
मूलान्तं[6] च तदन्तं च दद्यान्नाम महेश्वरि ॥ ९४ ॥
काल्याया स्पर्शकाल्या च स्पर्शताराविधौ शिवे ।
स्पर्शच्छिन्नाविधौ देवि चन्द्रषट्षोडशक्रमात् ॥ ९५ ॥
कला[7]क्रमान्महेशानि रक्तचण्ड्या[8] तु तत्क्रमात् ।
दुर्वासा मन्वगस्त्यादि तथा स्वमा[9]वतीविधौ ॥ ९६ ॥
मधुमत्या च दिव्यौघा[10] भिन्नरूपा प्रकीर्तिता ।
षोडश्यां च परायां च पराप्रासादकेऽपि च ॥ ९७ ॥
षड्विद्याया शाम्भवे च गुरवो भिन्नरूपिण ।
मालास्थं चाथ न्यासस्थ मूलरश्मिस्थमेव च ॥ ९८ ॥

[1] C °धो°। [2] C °द्धो°। [3] C D °द्धि°। [4] D शाक्ति°। [5] B °गोचरं।
[6] D °ला। [7] B N स्वरा। [8] C °न्द्रां। [9] C सत°। [10] C °घा।

नामदाने विधिरयं मया प्रोक्तो महेश्वरि ।
सम्प्रदायक्रमेणैव शाम्भवे पूर्वमीरितम् ॥ ९९ ॥
यत्तत्र नोक्तं देवेशि यत् सिद्धमतकेऽपि च ।
यज्ज्ञेय[1]मत्र देवेशि चतुःखण्डक्रमेण च ॥ १०० ॥
पुनरुक्तिर्न मन्तव्या विद्याभेदादिशेषता ।
श्रीचूलिको[2]र्मिलाचक्रं राजादिपशुगोचरम् ॥ १०१ ॥
नवचक्राणि देवेशि कथ्यन्ते शृणु यत्नतः ।
केरलाख्यं च दशमं प्रत्येकं त्रिविधं भवेत् ॥ १०२ ॥
एतद्विवेचनं देवि संक्षेपात् कथ्यते शृणु ।
त्रैविध्यं चैव श्रीचक्रे क्रमं शृणु महेश्वरि ॥ १०३ ॥
अष्टोत्तरशतं संख्या श्रीचक्रे शक्तयः स्मृताः ।
चतुःपञ्चाशदेवात्र मध्यचक्रे क्रमो भवेत् ॥ १०४ ॥
शक्तिभि[3]र्नन्द[4]संख्याभिः कनिष्ठं परिकीर्तितम् ।
चूलिकाख्यं महेशानि त्रिविधं परिकीर्तितम् ॥ १०५ ॥
पञ्चाशत्पीठनाम्ना वा षड्त्रिंशज्जातिमध्यतः ।
दशविद्यारूपजातिगन्धभेदक्रमेण च ॥ १०६ ॥
कुलाकुलक्रमेणैव काश्मीरगौडभेदतः ।
अष्टकन्यासमायोगात् कनिष्ठं परिकीर्तितम् ॥ १०७ ॥
एत[5]त्क्रमं महेशानि यथावदवधारय ।
शक्तिमाहूय देवेशि कञ्चुकीं गृह्य पार्वति ॥ १०८ ॥
एकैकां कञ्चुकीं देवि शिवहस्ते प्रदापयेत् ।
वस्त्रग्रन्थिं तु निर्भेद्य सामरस्ये नियोजयेत् ॥ १०९ ॥
ऊर्मिलाख्यमिदं देवि चूलाचक्रं शृणु प्रिये ।
शक्तिमाहूय यत्नेन[6] चू[7]लिकां गृह्य यत्नतः ॥ ११० ॥

[1] N चतस्र॰। [2] B C N चूडाचो॰। [3] D गतभि॰। [4] B॰ष॰। [5] B एवं। [6] N देवेशि। [7] C चो॰, N चा॰।

कुम्भे संस्थाप्य सम्पूज्य शिवमाहूय सादरम् ।
यस्य यथा च संप्राप्ता सा तस्य चक्रमध्यगा[1] ॥ १११ ॥
चूलिकाख्यक्रमो देवि कथितः श्रीक्रमं शृणु ।
परस्परस्नेहयोगात् श्रीचक्रे विनिवेशनम् ॥ ११२ ॥
*केरलाख्यक्रमे देवि भिन्नं भिन्नं निवेशनम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ११३ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यतारासंवादे
ऋणिधनिचक्रविनिर्णयं नाम पञ्चमः पटलः ॥ ५ ॥

[1] C °मा ।  * This line is absent in C.

## षष्ठः पटलः

श्रीदेव्युवाच ।

एतेषां च फलं देव कथयस्व ममाधुना ।

श्रीशिव उवाच ।

एतज्ज्ञानी महेशानि शिव एव न संशयः ॥ १ ॥
वश्यस्तम्भाकर्षणं च त्रैलोक्यवश्यता तथा ।
अञ्जनं तिलकं गुप्तिः पादुका गुटिका तथा ॥ २ ॥
वेतालयक्षिणीसिद्धिस्त्रिधातुर्दस्तादु¹त्तरम् ।
खेचर्य्यादिमहासिद्धिः परकायप्रवेशनम्²॥ ३ ॥
शापानुग्रहणं वाक् च कामरूपत्वमेव च ।
रसायनं च त्रैलोक्यं महेन्द्रादीन्द्र³जालिकम् ॥ ४ ॥
अणिमाद्यष्टकं देवि खड्गादये तथैव च ।
मूकान्धस्तब्धीकरणं संहारखड्गके तथा ॥ ५ ॥
पताकाद्वन्द्वयुद्धस्य जयो वन्ध्यात्वनाशनम् ।
पौरुषं च मनःस्थैर्य्यं रजकः स्वर्णभैरवः ॥ ६ ॥
धनदा च तथा शान्ता पद्मा मधुमती तथा ।
रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ॥ ७ ॥
गोपनीयं गोपनीयं गोपनीयं पुनः पुनः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८ ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यं परमं वरम् ।

¹ D दम्मद्यु° । ² N °दिक° । ³ D प° ।

श्रीशिव उवाच ।

सर्वं विशेषतः प्रोक्तमथ कादिक्रमं शृणु ॥ ९ ॥
दिव्यसिद्धमानवेशमहाकालक्रमेण च ।
अतिकालकरालास्य[1]वीरनाथक्रमेण च ॥ १० ॥
पश्चातिकाले नव च कराले दश[2] पार्वति ।
काल[3]त्रयं महाकाले नवभेदा गुरुक्रमात् ॥ ११ ॥
वीरनाथे शतं देवि गुरु[4]भेदः प्रकीर्तितः ।
नवनाथयुग्मभेदात् सिद्धेः[5] साम्यं कहे भवेत् ॥ १२ ॥
एतत्क्रमेण देवेशि दीक्षणं कादिसम्मते ।
अस्यामेव महेशानि शम्भोः प्राधान्ययोगतः ॥ १३ ॥
शाम्भवत्वं भवेद्देवि शिवोऽहं निर्गुणेति च ।
शक्तेः प्राधान्याच्छाक्तत्व देवीरूपाहमेव सा ॥ १४ ॥
कालिकाहं महातारारूपाहं सर्वदैव च[6] ।
तद्द्वयाच्छैवशक्ति स्यादिति सक्षेपतो मतम् ॥ १५ ॥
स्थित्वा दिव्यौघपानं च कीर्तितं परमेश्वरि ।
सिद्धौघे स्थापयित्वा तु पान कुर्यान्महेश्वरि ॥ १६ ॥
मानवौघे समुत्थाय क्रमात् त्रितयमीरितम् ।
संगीभूत्वा तु चैतन्यं सहयोनि कुलेश्वरि[7] ॥ १७ ॥
निसर्जनोत्तरं देवि भद्रनाथस्य कीर्तितम् ।
वीरतृत्यु[8]त्तर देवि चाति[9]कालमतक्रमः[10] ॥ १८ ॥
शक्तिपात्रं स्थाप्य भिन्नं दक्षिणामूर्तिसम्मते ।
शक्तिपात्रं च गृह्णीयात् वीरनाथमत शिवे ॥ १९ ॥

[1] B °स्य° । [2] C °शं । [3] B C °ले । [4] C ग्रह° । [5] B D सिद्दि°, C शुद्धे । [6] D तम् । [7] B °र, C °र, D °रा । [8] B D त्रिपृ°, C तृष्णु° । [9] C वाभि°, B चान्ति° । [10] D कमेण तु, N कमात् ।

कुलचक्रं भवेत्काल्या[1]मकुलं[2] कालिकामनौ ।
कुलाकुलं च तारायां सम्प्रदायत्रयान्तरे ॥ २० ॥
दिव्यमार्गवीरमार्गपशुमार्गक्रमेण च ।
पूर्णाभिषेकयोगेन चाज्ञानाम प्रदापयेत् ॥ २१ ॥
पूर्णाभिषेको देवेशि हादिकादिक्रमेण च ।
कथ्यते देवदेवेशि शृणु सावहिता भव ॥ २२ ॥
शुभमासे शुभर्क्षे च शुभलग्ने शुभोदये ।
कालरात्रिदिने प्राप्ते वीररात्रिदिने तथा ॥ २३ ॥
मोहरात्रिदिने चैव महारात्रिदिने तथा ।
क्रोधरात्रिदिने देवि घोररात्रिदिने तथा ॥ २४ ॥
तारारात्रिदिने चापि अवलारात्रियोगजे ।
दारुणासङ्गमे वापि मकरे कुम्भसङ्गमे ॥ २५ ॥
विविक्तस्थानमासाद्य स्थानशुद्ध्यादिपूर्वकम् ।
पर्वते विपिने घोरे शून्यगेहे श्मशानके ॥ २६ ॥
एकलिङ्गे शिवावासे श्मशानाष्टककेऽपि च ।
चक्रपाणिगृहे नद्यां पुर्यां पीठाष्टके शिवे ॥ २७ ॥
पञ्चाशत्पीठमध्ये वा पुष्पिण्युत्सवकेऽपि च ।
गङ्गागर्भे तडागे च वेश्यावासे च सङ्गमे ॥ २८ ॥
कुलवृक्षवने वापि कदलीवनमध्यतः ।
अथ पूग[3]वने देवि नारिकेलवने तथा ॥ २९ ॥
कदलीमण्डपे दिव्ये वाटिकायां विचित्रिते ।
पालाशवनमध्ये च पुण्यक्षेत्रे विशेषतः ॥ ३० ॥
स्वैरिणीगृहमध्ये च कुट्टनीनर्त्तमण्डले ।
विशिष्टस्थानमासाद्य मण्डपं तत्र कारयेत् ॥ ३१ ॥

[1] D °देवि । [2] C कुरथ, D मन्नं । [3] C भट्टुग (!) ।

कल्याहस्त सूर्यहस्त नवहस्त महेश्वरि ।
पञ्चहस्त महेशानि नागुण्डीक्रमेण च ॥ ३२ ॥
अथवा एककुण्डाख्यक्रमेण परमेश्वरि ।
मण्डप कारयेद्देवि मेरुसाधनमार्गत ॥ ३३ ॥
श्रीमेरुमण्डप देवि यथादीक्षानुसारत ।
वितान[1]ध्वजभूपाढ्य प्राकारपरिखैर्युतम् ॥ ३४ ॥
गोपुरै सयुत देवि नानातोरणमण्डितम् ।
तदग्रे परमेशानि पूजामण्डपमाचरेत् ॥ ३५ ॥
अष्टाष्टकत्रिक्रमेण[2] पञ्चपञ्चकमार्गत ।
एतासा सन्निवेशो हि यथा भवति पार्वति ॥ ३६ ॥
तथा मण्डपमासाद्य अब्जानि[3] रचयेत्तत ।
सहस्रकोष्ठ[4]ज देवि सर्वतोभद्रमाचरेत् ॥ ३७ ॥
तत्र चक्र ताम्रपात्रे स्वर्णे रौप्ये च भूमिजे ।
वस्त्रे वा रचयेद्देवि तथा चक्रस्य तच्छृणु ॥ ३८ ॥
सर्वतोभद्रपीठ च देवपीठे प्रकीर्त्तितम् ।
एकाब्ज योगिनीपात्रे पञ्चाब्ज क्षेत्रपाल[5]के ॥ ३९ ॥
नवाब्ज गणपे प्रोक्त वटुके लिङ्गभद्रकम् ।
विरच्य परमेशानि मेरुमण्डपमाचरेत् ॥ ४० ॥
मेरुससाधन कर्म्म श्रीविद्योपासकस्य च ।
सकल निष्कल देवि द्विविध मेरुसाधनम् ॥ ४१ ॥
दीक्षाङ्गत्वेन सकल निष्कल कामनाङ्गत ।
श्रीविद्या कालिका तारा त्रिविद्योपासके शिवे ॥ ४२ ॥
मेरुससाधन देवि दीक्षाया परिकीर्त्तितम् ।

[1] D विशिष्ट॰ । [2] D ॰क्रमेणैव । [3] D N वज्राणि, C कृज्वानि ।
[4] C ॰ट॰ । [5] C ॰ने, N ॰क ।

एतद्भिन्ना[1] महेशानि नहि दीक्षा भवेत् क्वचित् ॥ ४३ ॥
श्रीविद्योपासकानां च पारम्पर्यक्रमं शृणु ।
आदौ बाला विनिर्दिष्टा[2] ततः पञ्चदशी मता ॥ ४४ ॥
तथा श्रीषोडशीविद्या पराविद्या तदुत्तरम् ।
ततश्चरणदीक्षा स्यान्निर्वाणदीक्षणं ततः ॥ ४५ ॥
ततः षट्शाम्भवाख्या च मेधादीक्षा तदुत्तरम् ।
अनुक्रमेण सयुक्ता मेधादीक्षाभिधा भवेत् ॥ ४६ ॥
अथ चैकतमा याति[3] ततः साम्राज्यदीक्षणम् ।
दिव्यसाम्राज्यमेधा[4] च तदनन्तरगा भवेत् ॥ ४७ ॥
विद्याराज्याभिधा देवि छिन्नाविद्याविधिर्भवेत् ।
साम्राज्यं पारमेष्ठ्यं च बगलामनुगोचरम् ॥ ४८ ॥
श्रीविद्याढ्या तु बगला ताराढ्या छिन्नमस्तका ।
एतद्दीक्षोत्तरं देवि नान्या दीक्षास्ति कुत्रचित् ॥ ४९ ॥
बाल्या देहशुद्धिश्च ततो विद्याधिकारता ।
विद्याधिकारता याते श्रीषोढोपासनं चरेत् ॥ ५० ॥
षोढाधिकारी देवेशि पञ्चषोढा न्यसेत्तनौ[5] ।
विन्यासी पञ्चषोढायाः पराविद्यां जपेत् सदा ॥ ५१ ॥
परापट्कं ततो न्यस्य तच्चरणचिन्तनम् ।
ततो निर्वाणं विन्यस्य ततः शाम्भवमाचरेत् ॥ ५२ ॥
तत् षोढात्रितयं न्यस्य रश्मिचिन्तनमाचरेत् ।
श्रीरश्मिं च पराश्मिं द्वितयं विन्यसेत्ततः ॥ ५३ ॥
मेधादीक्षा समग्रा तु ततो भवति पार्वति ।
मेधोत्तरं महेशानि साम्राज्यमेधिकां न्यसेत् ॥ ५४ ॥
ततो दिव्याभिधां न्यस्य सदाशिवसमो नरः ।

[1] B C N °द्भिना । [2] D °मनुदिष्टा । [3] B चैकतमा याति, N चैकतमां याति, D चैकतमा याति । [4] D °मेधा । [5] B °तनौ ।

मेरुभेदादिविज्ञानं श्रीमहासिद्धशैवके ॥ ५५ ॥
कालिकाम्नायतंत्रे तु ऊर्ध्वाम्नाये प्रकीर्त्तितम् ।
अत्रापि देवदेवेशि कथ्यते चान्ति[1]मे विधौ ॥ ५६ ॥
कुण्डादि[2]रचना देवि तत्रै[3]वं महेश्वरि ।
क्रमागतात्सूचितं[4] च प्रकृतं शृणु पार्वति ॥ ५७ ॥
पूर्वोक्तं मण्डपं कृत्वा नानाचित्रविचित्रितम् ।
घण्टानादविभूषाढ्यं दर्पणोदरसन्निभम् ॥ ५८ ॥
भूमिं कृत्वा महेशानि वक्ष्यमाणं समाचरेत् ।
विधाय चक्रं तन्मध्ये चक्रे कुम्भं निधाय तम् ॥ ५९ ॥
कार्योदकैः समापूर्याभिषिञ्चामि वदेन्मनुम् ।
क्रमागतसमाचारनिरते भक्तिशालिनि ॥ ६० ॥
विरच्य विपुलं चक्रं प्रतियोनिं तु षोडश ।
त्रिकोणानि विधायाथ मध्ये कुम्भं तु विन्यसेत् ॥ ६१ ॥
सौवर्णं राजतं ताम्रं काचं मार्त्तिकमेव वा ।
पूरितं क्षारितं येन क्वथितेनाक्षरौषधैः[5] ॥ ६२ ॥
निक्षिप्य नवरत्नानि धान्यानि विविधानि च ।
हिरण्यानि सताम्राणि वासोभ्यामपि वेष्टयेत् ॥ ६३ ॥
रक्ताभ्यां चन्दनयुतं पनसाश्वत्थपल्लवैः ।
शतक्रतुलतावद्धैर्मातुलुङ्गफलान्वितैः ॥ ६४ ॥
पि[6]धानकलशानन्यानन्येष्वेकै[7]कशो न्यसेत्[8] ।
सार्धं सहस्रं त्रिंशच्च षष्टिसंख्या क्रमोदिता ॥ ६५ ॥
मध्यचक्रेषु तोयादि कृत्वा बाह्याधिपूज्य च ।
कालात्म[9]नित्यामंत्राश्च जपित्वा पूर्ववासरे ॥ ६६ ॥

[1] C N °न्त°। [2] B °ना। [3] B °त्रो, D °नै°। [4] B रुचिरं। [5] B वि°। [6] C °ष्टिके°। [7] D °न्यथा। [8] D N °शे।

कालाम[1]नित्यामंत्राश्च कादावपि महेश्वरि ।
कादौ श्रीचक्रस्थाने च[2] कालीचक्रं महेश्वरि ॥ ६७ ॥
त्रि[3]कोणाद्येषु भेदेषु समता परिकीर्त्तिता ।
तारायां कालिकास्थाने ताराचक्रं महेश्वरि ॥ ६८ ॥
कालामनित्यास्थाने च वाग्देव्यक्षार्णदेवता ।
सर्वत्र समता प्रोक्ता मनं तु कादिवद्भवेत् ॥ ६९ ॥
जन्मर्क्षे प्रातरुत्थाय स्वनित्यां तत्र पूजयेत् ।
काल्यां तारानिधौ देवि नित्यास्थाने मनुं जपेत् ॥ ७० ॥
सहस्रं प्रजपेत्पश्चात्[4] होमं कृत्वा समन्ततः ।
तन्मूलं षोडशाह्नानि प्रायश्चित्तं समाचरेत् ॥ ७१ ॥
षष्टिजपः कालनित्यानामपारायणं तथा ।
मंत्रपारायणं देवि चक्रपारायणं तथा ॥ ७२ ॥
यंत्रपारायणं देवि स्वयं वा स्वगुरुश्च वा[5] ।
दिनतो वारतः पश्चान्मासान्षट्त्रिंशता दिनैः ॥ ७३ ॥
सन्ध्याचतुष्टयं हादौ कादौ युग्मे[6] त्रयी भवेत् ।
प्रायश्चित्तं समाचर्य्य सामग्रीमष्टकार्चने ॥ ७४ ॥
कृत्वा संस्थाप्य यत्नेन विधोक्तं तिलकं चरेत् ।
शृङ्गपात्रस्थशङ्खादिपात्रमङ्गीतनर्चनैः ॥ ७५ ॥
मुदितैर्योगिनीवृन्दैरेकैकं देवतामभि. ।
वृतैः सम्पूजितैः सार्द्धमभिषिञ्चेद्गुरुः स्वयम् ॥ ७६ ॥
षोडशाभिषेकमंत्रैश्च कह[7]हादिक्रमोदितैः ।
मूलमंत्रैश्च वा देवि सहस्रमभिषेचयेत् ॥ ७७ ॥
काडचक्रं ताम्रजं च तत्र चक्रं सुवर्णजम् ।

[1] D N °ले। [2] B गंस्थने। [3] C °दि°। [4] B °नित्या।
[5] B °न्त्। [6] C युग्ने कर्ने°। [7] D हादि°।

महापात्रे तु संस्थाप्य विद्या तत्राभिषेचयेत् ॥ ७८ ॥
विद्या[1]जलैर्महेशानि गुरोश्च कृपया युत[2] ।
अभिषिच्य प्रयत्नेन चक्षुष्मत्यादि सा[3]न्तकम् ॥ ७९ ॥
सम्प्रदायत्रयेणैव शिष्य स्वस्तिकमण्डले ।
सस्थाप्य सिच्य यत्नेन तदङ्गे जपपूर्वकम् ॥ ८० ॥
देवीरूप शिष्यतनु कलशस्याक्षरै सह ।
परकायक्रमेणैव जीवकीटक्रमेण च ॥ ८१ ॥
भृङ्गित्व याति देवेशि तज्जीव पुत्तलीतनौ ।
स्थाप्य शिष्य बोधयेच्च ब्रह्मानन्दपरायण ॥ ८२ ॥
जीव कीट पुरा[4] भूत्वा भृङ्गित्वमभिगच्छति ।
तत षट्चक्रभेद च कृत्वा तद्रसभुग्भवेत् ॥ ८३ ॥
तत्स[5]राग महेशानि स्थापित यत्रपीठके ।
तेन[6] मत्रान् लिखेत्तत्र तस्योच्चारणमाचरेत् ॥ ८४ ॥
भृङ्गावली तेन याति चक्र[7]मत्रार्ण[8]योगत ।
मत्रवर्णान् चक्रवर्णान् कियत्सख्यानि कानि वै ॥ ८५ ॥
एतद्विभाव्य गणयेत्तावदशप्रपूर्णता ।
जीवकीटस्ततो भृङ्गी ततस्त्वेव[9] चराचरम् ॥ ८६ ॥
तेन भृङ्गावली नाम योगिनामपि दुर्लभा ।
क्रमदीक्षायुताना च भृङ्गित्व सुलभ[10] क्रमात् ॥ ८७ ॥
मत्ररूपो भवेत्तेन सम्राण्मेधा प्रकीर्त्तिता ।
स्वय शक्तिस्तद्द्वय च शक्तिस्त्वक्रमयोगत ॥ ८८ ॥
शैवशाक्ते शाक्तशैवे तद्द्वयक्रमयोगत ।
चक्राणि चैव विज्ञाय उक्तमार्गेण पार्वति ॥ ८९ ॥

[1] B °जा° । [2] B पुन । [3] D °गा°, C N °शा° । [4] N परा° ।
[5] B मङ्गप°, D तत्पा° । [6] B निन° । [7] N °के । [8] B °न्त° ।
[9] B D °स्तेन । [10] C भक्त्या ।

चक्राणि चैव निर्भिद्य स्वरूपं तत्स्वरूपकम् ।
न कीटत्वं न भृङ्गित्वं स्वरूपेणैव देवता ॥ ९० ॥
देवतारूपभावे[1]न क्षणात्तद्रूपता भवेत् ।
आदौ तु पुत्तलीं कृत्वा तत्र जीवं प्रविन्यसेत् ॥ ९१ ॥
ज्ञात्वा तु[2] प्रलयं देवि ततश्च संयतेत् शिवे ।
कलौ पापसमाकीर्णे न समाधिर्न योगता ॥ ९२ ॥
यदि योगी भवेद्देवि नहि तत्र फलं भवेत् ।
तस्मात्कारणतो देवि मंत्रयोगं समभ्यसेत् ॥ ९३ ॥
स्वक्रमं सोऽपि कथयेत्तदा प्रभृति सोऽपि तम् ।
अनुतिष्ठेदविच्छिन्नं पर्यायं तस्य विच्युतौ ॥ ९४ ॥
सहस्रं प्रजपेद्विद्यां अभिषेकसमन्वितः ।
दिनषोडशकं वापि नवरात्रं च वा प्रिये ॥ ९५ ॥
पञ्चरात्रं त्रिरात्रं च यथावत्साधयेद्ध्रुवम् ।
चक्षुष्मत्यादि मेधान्तं पूर्वं संसाधयेद् ध्रुवम् ॥ ९६ ॥
सर्वे मंत्राः प्रयोक्तव्याः षडाम्नायादिभेदजाः ।
अष्टादशाम्ना[3]यमंत्राः कादिहादिक्रमेण च ॥ ९७ ॥
षट्दर्शनाभिधा मंत्रा दशविद्या[4]प्रभेदजाः ।
ते सर्वे चात्र द्रष्टव्याः श्रोतव्याः केचन प्रिये ॥ ९८ ॥
जप्तव्याः केऽपि[5] देवेशि दीक्षायोगोऽत्र कारणम् ।
एवं संप्राप्तयोगी हि शिवरूपो भवेन्नरः ॥ ९९ ॥
चक्षुष्मती वाग्मती च स्पर्शनिल्या[6] महेश्वरि ।
वर्णदीक्षा क्रिया[7]दीक्षा तथैव च कलावती ॥ १०० ॥
पञ्चायतनिका चैव तथा वेधमयी[8] शिवे ।

[1] N °भेदे° । [2] C तद् । [3] B षडाम्ना° । [4] C °दविशेष° ।
[5] D °चिन् । [6] B °निर्घा, C °नग्री । [7] C कमा° । [8] B °यो, C °ती ।

वेधः पञ्चविधो देवि पूर्वमेव प्रकाशितः ॥ १०१ ॥
पूर्णदीक्षा महेशानि ऊर्ध्वाम्नायमयी तथा ।
निर्वाणदीक्षा देवेशि तथा शाम्भवभेदजा ॥ १०२ ॥
वेदवाणपशुपतिक्रमयोगेन वै कहे ।
मेघा साम्राज्यमेधा च दिव्यसाम्राज्यरूपिणी ॥ १०३ ॥
एतद्युक्तः केरलस्तु सक्षेपेण प्रकाशित. ।
चक्षुष्मन्यादि–ऊर्ध्वान्ता काश्मीरे[1] परिकीर्त्तिता ॥ १०४ ॥
चक्षुष्मन्यादिपूर्णान्ता गौडी दीक्षा प्रकीर्त्तिता ।
पष्टितत्त्वाष्टसिद्धिश्च क्रमेण परिकीर्त्तिता ॥ १०५ ॥
महाकालकलारम्भवाणतत्त्वादिपात्रयुक् ।
दशाङ्गाश्चाष्टपञ्चागान् पूर्वमेव मयेरितान् ॥ १०६ ॥
तृतीयखण्डे देवेशि सर्वमेतत्प्रकीर्त्तितम् ।
मनोरथमयी सिद्धिः साम्राज्यमेधाविधौ भवेत् ॥ १०७ ॥
अथवा पण्णवन्यष्टकलशास्तत्र विन्यसेत् ।
तेषु शक्तीः समावाह्य सम्पूज्यैनामिषेचयेत् ॥ १०८ ॥
एकान्तसफलं जन्मदिने कृत्वाभिषेचयेत् ।
नाथैस्तत्त्वैश्च नित्याभि कालनित्यान्तविद्यया ॥ १०९ ॥
आधारे हृदये शीर्षे वह्नौ सूर्ये निशाकरे ।
ध्यायन् त्रिसन्ध्यं प्रजपेत् सर्वगं व्यञ्जन स्वरम् ॥ ११० ॥
न्यसेच मातृकास्थाने तथा तद्देहसिद्धये ।
ग्रहाणा[2] वैपरीत्येषु जन्मर्क्षे ग्रहणे द्वयो ॥ १११ ॥
कुहुप्राप्तौ[3] रिपु[4]क्लेशे कुर्य्यादेवाभिषेचनम् ।
तेन दोषाः स्पृशन्त्येन न कदाचिन्न तद्बलात् ॥ ११२ ॥
क्षुद्राणि क्रूरकर्म्माणि कृत्याश्च रिपु[5]कल्पिता ।

[1] B °रो, N ° रौ। [2] C ग्रहण, B ग्रहाणां। [3] C °मामौ। [4] B पुस। [5] D विप्र°।

श्रीदेव्युवाच ।

बलं कथं भवेदस्य सेकस्य परमेश्वर ॥ ११३ ॥
ब्रूहि मे तद्बलं येन क्लेशा नश्यन्त्यशेषतः ।

श्रीशिव उवाच ।

सोमसूर्य्याग्निरूपेण जलेन स्पर्शयोगतः ॥ ११४ ॥
नश्यन्त्यशेषदोषास्तु तस्मात् सेकसमो नहि ।
सोमसूर्य्याग्निरूपत्वं जलस्य परिकीर्त्तितम् ॥ ११५ ॥
तस्मादशेषदु.खार्त्तिशान्त्यै स्यादभिषेचनम् ।
सतसूक्तेषु[1] कालेषु पुण्ये[2]ष्वन्येषु चादरात् ॥ ११६ ॥
कुर्य्यात्सदक्षिणां पूजां गुरोः प्रत्यक्षमेव वा ।
उक्तेपूल्यान[3]जातेषु पूजयेत्स्वर्णपुष्पकैः ॥ ११७ ॥
अभिषिक्तस्तु विधिना प्रदद्याद्दक्षिणां गुरोः ।
गुरुं तदग्रतः प्रातर्विधं तदनुजं तथा ॥ ११८ ॥
गुरोर्गुरुं तद्गुरुं च स्वप्र[4]तो लब्धनियकान् ।
प्रणामपूजास्तवनसेवा[5]दिभिरुपासनैः ॥ ११९ ॥
तोषयेदन्यथा शक्तिः स्वीया तद्गा[6]मिनी भवेत् ।
बहुचन्दनकाश्मीररत्नकस्तूरिकायुतैः ॥ १२० ॥
पङ्कै[7]र्विदध्यात् सर्वत्र गुरुपादद्वय शिवे ।
प्रतिवर्षं महेशानि कुर्य्यादेवाभिषेचनम् ॥ १२१ ॥
पूर्णाभिषेकयुक्तो हि ऊर्ध्वाम्नायादि चाष्टकम् ।
गुरुं प्राप्य महेशानि तद्दीक्षार्थं पटेत्स[8]दा ॥ १२२ ॥
इति संक्षेपतः प्रोक्ता मेधादीक्षा महेश्वरि ।

[1] C °क्तं तु, D सम्प्रयुक्तेषु । [2] D अन्ये° । [3] D स्त्यान° (?), N °पात°, B °तात° । [4] D °र्ग° । [5] B °का° । [6] B °द्गा° । [7] D °श्चो । [8] C °व तत्म° ।

कादिक्रमे महेशानि कथ्यते श्रृणु साम्प्रतम् ॥ १२३ ॥
सर्वव्यापकरूपं च[1] शक्ति[2]ज्ञानं महेश्वरि ।
परम्परात्परं[3] देवि तत्र देवि द्विधा मतम् ॥ १२४ ॥
कार्यं हार्यं महेशानि कार्यं कालीमतं भवेत् ।
हार्यं श्रीत्रिपुराख्यं च कहाख्य तारिणीमतम् ॥ १२५ ॥
यः कश्चिन्मन्त्रजापी तु तत्र काली वरप्रदा ।
भाषाभेदाः शावराणा[4] मंत्रमात्रे महेश्वरि ॥ १२६ ॥
वरदानाधिकारो हि कालिकायाः प्रकीर्त्तितः ।
एतत्कथाविस्तरस्तु कादिहादिविनिर्णये ॥ १२७ ॥
पूर्वं विस्तरतो देवि मया तत्परिकीर्त्तितम् ।
उभयत्र भवेन्मेधाभेदः पारायणे क्वचित् ॥ १२८ ॥
कादौ स्पर्शमणिर्देवि तथा चिन्तामणि. प्रिये ।
सिद्धकाली महाविद्याराज्ञी कामकला ततः ॥ १२९ ॥
हसकाली गुह्यकाली वेदपञ्चरसक्रमात् ।
शाम्भवं परमेशानि क्रमान्मेधा प्रकीर्त्तिता ॥ १३० ॥
[5]उभयक्रमतो देवि सम्राण्मेधा प्रकीर्त्तिता ।
नाडीपारायणं नाम मन्त्रपारायणं तथा ॥ १३१ ॥
चक्रपारायणं देवि पूर्णोर्ध्वाम्नाय एव च ।
चरणस्तुर्य्यचरणस्तथा पट्शाम्भव[6] शिवे ॥ १३२ ॥
मेधा साम्राज्यमेधा च क्रमेण परमेश्वरि ।
तत्प्रश्नविद्याजन्मादिर्वेदे[7]शाल्य[8]जातके ॥ १३३ ॥
कालनित्या कालचक्रं उभयत्र सम भवेत् ।
तद्द्वयोक्तशिवः प्रोक्तः साक्षात्परशिवो भवेत् ॥ १३४ ॥

[1] B °पत्वं। [2] C शाक्त°। [3] N °रा। [4] D सर्वंवाणी।
[5] This line is dropped on both B and N. [6] D N °व, C °वे।
[7] N °द°। [8] D °क्ष°।

शिवदेवीव्रटेशाख्य[1]स्तथा चानन्दभैरवः ।
केरलश्चैव काश्मीरो गौडचैतन्यगः शिवे ॥ १३५ ॥
प्रत्येकं तु निगदितं सम्प्रदायचतुष्ककम्[2] ।
आज्ञानाम योगपट्टः क्रमेण दापयेद्गुरुः ॥ १३६ ॥
अवधूतः सर्वगः स्यात् पूर्वोक्तनिर्णयो ह्ययम् ।
कापालिके पञ्चभेदाश्चण्डे भेदद्वयं भवेत् ॥ १३७ ॥
स्वायम्भुवे त्रयं देवि कौले चाष्टौ प्रकीर्तिताः ।
वीरे पञ्च महेशानि वैष्णवे दश पार्वति ॥ १३८ ॥
गाणपेऽष्टौ महेशानि जैने[3] शतद्वयं[4] भवेत् ।
सौरे पञ्च महेशानि बौद्धानां शतमात्रकम् ॥ १३९ ॥
दश पाशुपते प्रोक्ता मुण्डी त्रिंशन्महेश्वरि ।
केरलश्चैव काश्मीरगौडभेदेन पार्वति ॥ १४० ॥
केरले भावना प्रोक्ता काश्मीरे चानुकल्पनम् ।
गौडे प्रत्यक्षदानं च चक्र[5]त्रितयमीरितम् ॥ १४१ ॥
केरले त्रितयं देवि वटवासि[6]मते शिवे ।
गुप्तोग्रकेरले देवि शुद्धकेरलके तथा ॥ १४२ ॥
तद्द्रव्यभावना देवि सर्वान्ते परिकीर्तिता ।
त्रिधा केरलमेतद्धि वटवासिमते शिवे ॥ १४३ ॥
एतद्भेदा महेशानि तारामूर्त्ते प्रकाशिताः ।
दिव्यौघपैर्महेशानि प्रसौ पञ्च प्रकीर्तिता ॥ १४४ ॥
आराध्य कलहद्रौ[7] च पुष्पचक्री तथैव च ।
जीवचक्री महेशानि सम्प्रदायान्तरं शृणु ॥ १४५ ॥
दशावतारपूर्वत्वं चैतन्यस्तदनन्तरम् ।
ब्रह्मादिपदपूर्वत्वं पञ्चाशदीश्वरान्तकम् ॥ १४६ ॥

[1] B वटेशानि । [2] B °ल । [3] D N वीरे । [4] D °त्रयं ।
[5] B क्रम° । [6] B °स्वामि° । [7] B °हार्दौ ।

पञ्चाशदीश्वराय च चैतन्यान्त महेश्वरि ।
पञ्चाशत् केशवाय च गणपाय तथैव च ॥ १४७ ॥
त्रिपुराय महेशानि कामाय परमेश्वरि ।
रत्या[1]य वा महेशानि छिन्नाया तु विशेषत ॥ १४८ ॥
डाकिन्याय तथा देवि भैरवाय च वा भवेत् ।
नृसिंहाय च चैतन्य किं वा[2] देशपरपरा ॥ १४९ ॥
कलहङ्[3]स्त्वाततायी गोमुखी वटभस्तथा ।
विज्ञानी वामविज्ञानी तथैव सिद्धदीक्षित ॥ १५० ॥
विद्याराट् च विराट् स्वामी[4] सम्राण्मण्डलमेव च ।
एते देशपर याता महासिद्धिप्रयोगजा ॥ १५१ ॥
सम्प्रदायविहीनाना कुलशास्त्रप्रयोजनात् ।
सर्वगर्हित इत्युक्तो भैरवाख्य[5] प्रकीर्त्तित ॥ १५२ ॥
वेदबाह्यो यथा प्रोक्तस्तथैवाय प्रकीर्त्तित ।
एतद्देशपर यातास्त्वन्यान् शृणु हि पार्वति ॥ १५३ ॥
तारावती भोगवती तथैव विमलावती ।
प्रज्ञा[6]वती मधुमती तथा प्रज्ञावती मता ॥ १५४ ॥
उद्भटाम्बावती देवि एते चार्हत[7]भेदजा ।
अनुग्रहाख्यश्चैतन्यस्तथैव निग्रहाभिध ॥ १५५ ॥
निग्रहानुग्रहाख्यश्च[8] राजचैतन्य एव च ।
कला[9]चैतन्यनामा च श्रीचैतन्यस्तथा शिवे ॥ १५६ ॥
दिव्यचैतन्यको देवि तथा प्रज्ञानवाचक ।
शाम्भनाख्यस्तु चैतन्यो विज्ञानाख्यस्तथैव च ॥ १५७ ॥
परा[10]चैतन्यनामाख्यस्त्वा[11]त्मचैतन्य एव च ।

[1] B ॰सा॰ । [2] B मिद्धा । [3] C ॰स्त॰ । [4] C ॰ह्भीमा ।
[5] D C वैरबाय । [6] D मद्मा॰ । [7] C N ॰हैन्त॰ । [8] C ॰हचैव ।
[9] C ॰लौ । [10] C पाय॰ । [11] C ॰व्यस्ता॰ ।

वैराजाख्यश्च चैतन्यः श्रीचैतन्यस्तथैव च ॥ १५८ ॥
प्रज्ञाचैतन्यनामा च प्रासादाख्यस्तथैव च ।
निर्वाणाख्यस्तु चैतन्यो मेधाचैतन्य एव च ॥ १५९ ॥
अथ शाम्भवचैतन्यः श्रीचैतन्यस्तथैव च ।
विद्याचैतन्यनामाख्यः सिद्धचैतन्य एव च ॥ १६० ॥
एते काश्मीरमार्गस्थास्त्रिपुरा कादिभेदतः ।
रत्नवारो देववारो मायादेवस्तथा शिवे ॥ १६१ ॥
काला[1]ख्यश्चैव काशीशो ब्रह्मवारस्तथापरः ।
राजवारः सिद्धवारो विश्वरूपस्तथापरः ॥ १६२ ॥
उन्मत्तभैरवाख्यस्तु वाक्शक्तिः काव्यसिद्धियुक् ।
भूतभैरवनामाख्यो मूर्तिस्फोटश्च विग्रहः ॥ १६३ ॥
विराट्भैरवनामाख्यो मूर्तिचालनवाक्परः ।
स्वराट्भैरवनामाख्यो वाञ्छाशक्तिसिद्धिगोचरः ॥ १६४ ॥
सम्राट्भैरवनामाख्यः सर्वरूपत्वसिद्धियुक् ।
श्रीमद्वटुकनामाख्यः शापानुग्रहकृत् कलौ ॥ १६५ ॥
सर्वत्र सर्वरूपत्वमानन्दभैरवे भवेत् ।
असि[2]ताङ्गो वाक्पर[3]श्च तथैवाञ्जनयुक् शिवे ॥ १६६ ॥
रूपभेदकल्पनाख्य[4]सिद्धिर्गुप्तिस्तथैव च ।
परकायप्रवेशश्च खेचरी चण्डभैरवे ॥ १६७ ॥
अन्यथासृष्टिकरणं क्रोधाख्ये सम्प्रदायके ।
इन्द्रजालमहेन्द्रादि कपालभैरवे भवेत् ॥ १६८ ॥
नदीसमुद्रशो[5]षादिभीषणाख्यप्रदायके ।
एते भेदा वीरचक्रे केरले शृणु पार्वति ॥ १६९ ॥

[1] B D N °मा°। [2] C °ति°। [3] C D °च°। [4] C रूपभेदे केरलाख्य°।
[5] B °षो°।

दिव्यबोधा[1]नन्दनथाः कलानाथान्तवाचकः ।
केवलं नन्दनाथाख्यः केवलं नामवाचक. ॥ १७० ॥
एकस्मिन् त्रितयं देवि क्रमेण योज्यते शिवे ।
मानवाद्यस्त्रयान्तो हि सिद्धचैतन्यवह्नि[2]युक् ॥ १७१ ॥
दिव्यचैतन्यगुणयुक् दिव्यप्रज्ञानमेव च ।
गुणयुक् परमेशानि नाथानन्दक्रमेण च ॥ १७२ ॥
नन्दनाथो महेशानि मिलित्वा बाणसंख्यक. ।
चैतन्यान्तो विलासाख्यो बाणसंख्याप्रवाचकः ॥ १७३ ॥
[3]सिद्धचैतन्यनामा च पञ्चधा पूर्ववत् प्रिये ।
सिद्धाद्य[4]श्च विलासान्तो बाणसंख्याप्रवाचकः ॥ १७४ ॥
सन्याद्यो हि विलासान्तो बाणसंख्याप्रवाचकः ।
[5]सिद्धप्रज्ञो महेशानि बाणसंख्याप्रवाचकः ॥ १७५ ॥
ऋ[6]द्धिचैतन्यनामाख्यो बाणसंख्याप्रवाचकः ।
अणिमाद्यष्टपूर्वत्वमेतदन्तं महेश्वरि ॥ १७६ ॥
चत्वारिंशत्प्रभेदाश्च मातृकाक्रमतोऽपि च ।
चत्वारिंशत्प्रभेदाश्च क्रमेण परमेश्वरि ॥ १७७ ॥
ओघत्रयं द्वैतमध्यं तदन्ते तु सरस्वती ।
शाम्भवाद्यं मध्यपूर्वं सरस्वत्यन्तकं शिवे ॥ १७८ ॥
बाणमेधा मध्यपूर्वं तदन्ते च सरस्वती ।
एवं क्रमेण देवेशि दशभेदाः प्रकीर्त्तिताः ॥ १७९ ॥
चिन्मेधा चैव चित्प्रज्ञा श्रीनाथश्च तदन्तरम् ।
सम्प्रदायत्रयं देवि बाणसंख्याप्रवाचकम् ॥ १८० ॥
सारस्वतपदं पूर्वं तदन्ते सुन्दरी शिवे ।

[1] C °भेदा°  [2] D °सिद्धि° ।  [3] Three lines from here are omitted in B D.  [4] C सप्ताद्य° ।  [5] C omits this line.  [6] B ह्न° ।

निग्रहाख्यं पदं पूर्वं तदन्ते तु सरस्वती ॥ १८१ ॥
सुन्दर्यन्तं च सिद्धाद्यं शापानुग्रहकारकम् ।
सुन्दर्य्यन्तं महेशानि कात्या[1]द्यं च सरस्वती ॥ १८२ ॥
साम्राज्याद्यं महेशानि तदन्ते तु सरस्वती ।
सौभाग्याद्यं महेशानि तदन्ते तु सरस्वती ॥ १८३ ॥
देवीपरम्परायां तु सङ्क्षेपेण प्रकाशितम् ।
दिव्याद्यं श्रीविलासान्तं बाणसंख्याप्रवाचकम् ॥ १८४ ॥
दिव्याद्यं च महाप्रज्ञा बाणसंख्याप्रवाचकम् ।
सम्राट् वैराट् च स्वाराज्यमधिराज्यं च राज्यकम् ॥ १८५ ॥
महा[2]राज्यं पारमेष्ठ्यमाधिपत्यं तथैव च ।
सार्वभौमश्चक्रवर्ती शकानन्दस्तथैव च ॥ १८६ ॥
ब्रह्मानन्दश्चिदानन्दः पूर्णानन्दस्तथैव च ।
महासमरसानन्दो महानन्दस्तथैव च ॥ १८७ ॥
बाणक्रमेण देवेशि भेदानां नवतिर्भवेत् ।
बटुकस्य मतं प्रोक्तं नामानि सूचितानि च ॥ १८८ ॥
निरुक्तिश्च महेशानि दीक्षाभेदोत्तरं[3] शिवे ।
कथ्यते परमेशानि किमन्यत् श्रोतुमिच्छसि ॥ १८९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे नामविवरणं नाम षष्ठः पटलः ॥ ६ ॥

[1] D °मा° । [2] C ब्रह्म° । [3] N °दान्तरं ।

## सप्तमः पटलः ।

श्रीदेव्युवाच ।

हादिकादिक्रमेणैव सम्प्रदायत्रयं शिव ।
कथयस्व महादेव यद्यहं तव वल्लभा ॥ १ ॥

श्रीशिव उवाच ।

सूचिता परिभाषा च विस्तरः कथ्यते शृणु ।
मेधादीक्षायुतो देवि केरलः परिकीर्त्तितः ॥ २ ॥
षट्शाम्भवः प्रश्नयुतस्तथा चाष्टाष्टकान्वितः ।
ऋक्केरली महेशानि श्रीयजुः केरली तथा ॥ ३ ॥
श्रीसामकेरली देवि तथा चाथर्वकेरली ।
अथर्वे बहवो भेदा दिव्यसिद्धादिमानवैः ॥ ४ ॥
आनन्दभैरवशिवा दक्षिणामूर्त्तिरेव च ।
देवी च नवनाथश्च सिद्धभेदक्रमेण च ॥ ५ ॥
ओघत्रये महेशानि शिवशक्तिक्रमेण च ।
एतस्य लोपनाल्लोपा परापोढाक्रमेण च ॥ ६ ॥
तत्पराचरणैर्देवी शाम्भवाष्टादशक्रमात् ।
तदोघक्रमयोगेन अनुलोमक्रमेण च ॥ ७ ॥
अगस्तिदुर्गाचण्डीशास्त्रप्रावर्तीक्रमेण च ।
महाविद्यादिक्रमेण तदोघक्रमभेदतः ॥ ८ ॥
अथर्वकेरले भेदाः शाक्ता वै ते[2] प्रकीर्त्तिता ।
शैववैष्णवसौराणा गा[3]णवौद्धे तु[4] भिन्नतः ॥ ९ ॥

[1] C °योग° । [2] C चैते, N चेति । [3] B C ग° । [4] D °षु ।

दक्षहस्तेन पूजा स्याद्वामेन तर्पणं भवेत् ।
तर्पणं च तथा पानं दक्षेण परिकीर्त्तितम् ॥ १० ॥
वामेन पूजनं देवि क्रमेण परिकीर्त्तितम् ।
जलं दुग्धं नष्टदुग्धं संविद्रसवटी[1] तथा ॥ ११ ॥
वृंताकः सूरणो देवि दुग्धसारस्तथैव च ।
कुमारीपूजनं देवि परिभाषा तु केरले ॥ १२ ॥
परमेश[2]सपर्य्यादि तद्रूपत्वं सदा भवेत् ।
अन्यकर्मणि देवेशि प्रवृत्तिस्तस्य वै न च ॥ १३ ॥
तद्धस्तनिःसृतं तोयं[3] मुक्तारूपं क्षणाद्भवेत् ।
परकायप्रवेशं च चरा[4]चरपुरीगतिः ॥ १४ ॥
वयःस्थैर्य्यमथाकर्षः सर्वस्थावरजङ्गमे ।
ब्रह्माण्डगोलके या च या काचिज्जगतीतले ॥ १५ ॥
करामलकवद्देवि साधकस्य भवेद्ध्रुवम् ।
कादिहादिमते देवि फलमेतत् कहेपि च ॥ १६ ॥
काश्मीरं संप्रवक्ष्यामि शृणु पार्वति सादरम् ।
ऊर्ध्वाम्नायादिभिर्युक्तं काश्मीरी शक्तिपातयुक् ॥ १७ ॥
अष्टाष्टकसमायुक्तः काश्मीरस्तत्त्वसिद्धियुक् ।
ऋक्काश्मीरो यजुश्चैव सामकाश्मीर एव च ॥ १८ ॥
अथाथर्वणकाश्मीरो दिव्यसिद्धादिमानवैः ।
दक्षिणामूर्त्तिभेदेन तथा भैरवभेदतः ॥ १९ ॥
देव: सदाशिवश्चैव नवनाथक्रमेण च ।
चतुरशीतिसिद्धाश्च दिव्यौघौघशिवादितः ॥ २० ॥
शैवशाक्त तस्य सोपान् षोडशी तत्परा क्रमात् ।
चरणत्रययोगेन मन्त्र[5]गस्तिक्रमेण च ॥ २१ ॥

[1] B C °टी । [2] D ° मध । [3] B C ° तजलं । [4] B चरां° ।
[5] D सत्य° । [6] N यथा° ।

लोपा दुर्गा च चण्डेशी तथा स्वप्नावती क्रमात् ।
दशविद्यौघयोगेन काश्मीरे भेदमाननम् ॥ २२ ॥
शैववैष्णवगाणपे बौद्धसौरे तु भिन्नता ।
वामहस्तेन पूजा च दक्षेण तर्पणं मतम् ॥ २३ ॥
दक्षेण पानं देवेशि ह्यनुकल्पा[1] प्रकीर्त्तिता ।
अथ गौडं प्रवक्ष्यामि यथावदवधारय ॥ २४ ॥
पूर्णाभिषेकसंयुक्तस्त्वष्टाष्टकसमन्वितः ।
ऋग्गौडश्च यजुर्गौडः सामगौडस्तृतीयकः ॥ २५ ॥
अथर्वगौडो देवेशि तद्भेदं शृणु पार्वति ।
दिव्यसिद्धमानवौघदक्षिणामूर्त्तिभेदतः ॥ २६ ॥
आनन्दभैरवश्चैव सदाशिवपरंपरा ।
देवी च नवनाथाश्च सिद्धा अपि महेश्वरि ॥ २७ ॥
त्रितये शिवशक्तिभ्यां तल्लोप[2]क्रम[3]योगतः ।
षोडशीमनुलोपा च तथागस्तिक्रमेण च ॥ २८ ॥
दुर्गा चण्डेश्वरी देवी तथा स्वप्नावती क्रमात् ।
दशविद्यौघभेदेन सदाचरणभेदतः ॥ २९ ॥
अथर्वगौडे भेदश्च शाक्तमार्गे प्रकीर्त्तितः ।
शैववैष्णवसौराणां बौद्धगाणपके शिवे ॥ ३० ॥
भिन्नक्रमो महेशानि पूजनं वामहस्ततः ।
तर्पणं दक्षहस्तेन प्रत्यक्षं पानदानके ॥ ३१ ॥
महाविद्या सिद्धविद्या विद्याभेदेन पार्वति ।
विद्यारूपतदाचार[4]तद्विद्याक्रमयोगतः ॥ ३२ ॥
चक्रभेदा[5]म्नायभेदाच्चदाचरणभेदतः ।

[1] D °ल्पा। [2] B °पा° C °पा। [3] D °रूप°। [4] N °चान्वत°। [5] C भावा°।

विद्योपास्या गौडमार्गे त्रितयेऽपि क्रमो ह्ययम् ॥ ३३ ॥
शक्तिदेहे महेशानि ब्रह्माण्डसरसाः[1] प्रिये ।
त्रितयेऽपि भवेत् साम्यं नामपारायणं तथा ॥ ३४ ॥
मंत्रपारायणं देवि नाडीपारायणं शिवे ।
चक्रपारायणं देवि प्रोक्तं हादिमते शिवे ॥ ३५ ॥
अथ कादौ महेशानि सम्प्रदायक्रमं शृणु ।
मेधादीक्षादिसंयुक्तः श्रीकादिकेरली[2] भवेत् ॥ ३६ ॥
ऋक्केरली यजुश्चैव तथैव सामकेरली ।
पञ्चपञ्चकसंयुक्तः शक्तिपातसमन्वितः ॥ ३७ ॥
पट्शाम्भवप्रभ्रयुक्तस्त्रैकाल्य[3]ज्ञानगोचरः ।
अथर्वकेरलं देवि शृणु यत्नेन साम्प्रतम् ॥ ३८ ॥
दिव्यसिद्धमानवौघमहाकालक्रमेण च ।
अथानन्दभैरवेन सदाशिवक्रमेण च ॥ ३९ ॥
देवीक्रमेण देवेशि नवनाथप्रभेदतः ।
चतुरशीति[4]सिद्धैस्तु त्रितये शिवशक्तितः ॥ ४० ॥
तल्लोपनाचनपरत्वात् तत्पादक्रमतोऽपि च ।
चतुश्चरणयोगे च शाम्भवाष्टादशक्रमात् ॥ ४१ ॥
तदोघक्रमयोगेन शम्भुपादक्रमेण च ।
दशविद्यागुरुत्वेन[5] तदावरणयोगतः ॥ ४२ ॥
शैवादिपञ्चभेदैश्च पर्य्यायक्रमभेदतः ।
आगमश्च तथा काली[6] दे[7]शाम्नायक्रमेण च ॥ ४३ ॥
दर्शनायतनत्वेन भेदबाहुल्यमीरितम् ।
दक्षेण पूजा वामेन तर्पणं परिकीर्त्तितम् ॥ ४४ ॥

[1] D° सफलं । [2] B D° ले । [3] B D° लोक्य° । [4] B° विंशति° ।
[5] C च । [6] B° ले । [7] C द° ।

दक्षेण तर्पण देवि पान तेनैव पार्वति ।
वामेन देवता तर्प्या दक्षेण गुरुतर्पणम् ॥ ४५ ॥
केवलं वामहस्तेन द्वयोस्तर्पणमाचरेत् ।
केवल दक्षहस्तेन तर्पण केरली चरेत् ॥ ४६ ॥
गुरु सन्तर्प्य दक्षेण वामहस्तेन देवताम् ।
ब्रह्मकौलमते देवि तर्पण परिकीर्त्तितम् ॥ ४७ ॥
जल दुग्ध नष्टदुग्ध सविमिश्र तथैव च ।
सविदसवर्गी चैव वृन्ताकसूरणे तथा ॥ ४८ ॥
दुग्धसारो दुग्धसनिदासवश्च कुमारिका ।
पूजन परमेशानि कादिकेरलगोचरम् ॥ ४९ ॥
ऊर्ध्वाम्नायादिसंयुक्त कास्मीर [1] शक्तिपातयुक् ।
ऋक्कास्मीरो यजुश्चैव सामकाश्मीर एव च ॥ ५० ॥
अथाथर्वणकाश्मीरो [2] भेदान् सशृणु पार्वति ।
दिव्यसिद्धमानवौघमहाकालक्रमेण च ॥ ५१ ॥
अतिकालकरालारयकालवीरक्रमेण च ।
काली च नवनाथाश्च चतुरशीतिसिद्धय [3] ॥ ५२ ॥
त्रितये शिवशक्तिभ्या तद्गोपा कालिकाक्रमात् ।
अथ कामकला काली हसकाली क्रमेण च ॥ ५३ ॥
शैवादिपञ्चभेदेन सप्तपर्य्यायभेदत ।
भेदबाहुल्यमात्र स्याद्वामेन तर्पण स्मृतम् ॥ ५४ ॥
दक्षेण पूजा सम्प्रोक्ता ह्यनुकम्पा [5] प्रकार्चिता ।
अथ गौड प्रवक्ष्यामि यथायोगक्रमेण च ॥ ५५ ॥
पूर्णाभिषेकसंयुक्तो गौडश्च पञ्चपञ्चयुक् ।

[1] B °र°। [2] B °पर°। [3] D कुङ्कम°। [4] B D °री, C °रे।
[5] B °द्दिरा, C °द्वित। [6] D °म्पा।

ऋग्गौडो हि यजुर्गौटः सामगौडस्तथैव च ॥ ५६ ॥
अथर्वगौडो देवेशि यथावत् कथ्यते शृणु ।
दिव्यसिद्धमानवौघमहाकालकरालकाः ॥ ५७ ॥
वीरनाथस्तथा देवि नवनाथक्रमेण च ।
चतुरशीतिसिद्धार्थ[1]न्वितये शिवशक्तितः ॥ ५८ ॥
तल्लोपनाद्धवेल्लोपा[2] कला[3] कामकला[4] परा ।
तद्वदावरणे भेदाः कीर्त्तिताः परमेश्वरि ॥ ५९ ॥
शैवादिपञ्चकत्वेन साम्यं पर्य्यायसत्तके[5] ।
बाहुल्यं कीर्त्तितं देवि पू[6]र्वमेव[7] प्रकाशितम् ॥ ६० ॥
वामेन तर्पणं देवि दक्षेण पूजनं स्मृतम् ।
दानं पानं च[8] प्रत्यक्षं महाविद्याक्रमेण च ॥ ६१ ॥
सिद्धविद्याक्रमेणैव तथा विद्याक्रमेण च ।
युगानुरूपतो देवि सिद्धविद्यादिभेदतः ॥ ६२ ॥
तद्रूपशक्तिक्रमतस्तदाचारक्रमेण च ।
चक्रमायाम्नायभेदैस्तदा[9]चरणभेदतः ॥ ६३ ॥
शक्तियोगजब्रह्माण्डे सर्वे तत्र रसाः स्फुटम् ।
नामपारायणं देवि मंत्रपारायणं तथा ॥ ६४ ॥
नाडीपारायणं देवि कादिहादिकहेपि च ।
कादिहादौ[10] शाम्भवान्त[11]सम्राण्मेत्राभिधा भवेत् ॥ ६५ ॥
दिव्यसाम्राज्यमेधा च कहान्ता परिकीर्त्तिता ।
दिनतो वारतः पक्षान्मासात् षट्त्रिंशता दिनैः ॥ ६६ ॥
प्रायश्चित्तं समाचर्य्य कालनित्याक्रमेण च ।
पञ्चनित्याक्रमेणैव स्वगुर्वा स्वयं च वा ॥ ६७ ॥

[1] B °द्धौघ° । [2] B °पो । [3] N कालि । [4] B कालिका कमला ।
[5] D °सत्तके, °पमके । [6] C स° । [7] C °तन । [8] D पर्मेव ।
[9] D °व° । [10] B °दि° । [11] D शान्तरान्त° ।

पूर्वोक्तक्रममासाद्य कलारन्ध्रक्रमेण च ।
कामबाणगुणत्वेन दीक्षामण्डप[1]गो भवेत् ॥ ६८ ॥
होमं कृत्वा पूर्ववच्च सर्वं कार्यं महेश्वरि ।
आज्ञानाम प्रदद्याद्वै योगपट्टं समभ्यसे[2]त् ॥ ६९ ॥
अङ्गावरणमंत्राश्च पञ्चाशत् पद्ममन्त्र[3]काः ।
श्रोतव्याश्चैव मन्तव्या द्रष्टव्याः परमेश्वरि ॥ ७० ॥
अन्यत् सर्वं पूर्ववत्स्यात् संक्षेपादिदमीरितम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ७१ ॥

इति श्रीशक्तिसङ्गममहातंत्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे कादिदीक्षाविवरणं नाम सप्तम पटलः ॥ ७ ॥

[1] B D °ल । [2] C °माचरे° । [3] B °वर्ण°, C °पत्र° ।

## अष्टमः पटलः

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

श्रीशिव उवाच ।

निरुक्तं[1] द्रव्यभेदश्च कथ्यते शृणु साम्प्रतम् ॥ १ ॥
वीरादिकौलभेदाश्च पूर्वमेव प्रकाशिताः ।
विष्णुपाशुपतादीनां कथ्यन्ते परमेश्वरि ॥ २ ॥
पञ्चरात्रिव्रतं प्राप्ताः पाञ्चरात्राः प्रकीर्त्तिताः ।
दिनपञ्चकपर्य्यन्तं शैवानां न विलोकनम् ॥ ३ ॥
मुद्रासन्धारिणीं रण्डां कृत्वा सम्पूज[2]यन्ति ये ।
प्रसादः कस्य वेत्युक्ते[3] श्रीकृष्णस्येति यो वदेत् ॥ ४ ॥
स्वमुक्तं चैव नैवेद्यं देवतार्थप्रयोजकः ।
वर्त्तन्ते वैष्णवा ये च शिवनिन्दापरायणाः ॥ ५ ॥
वैष्णवानपि निन्दन्ति पाञ्चरात्राश्च ते मताः ।
पाषण्डाख्यव्रतं प्राप्ताः पाषण्डास्ते प्रकीर्त्तिताः ॥ ६ ॥
श्मशानभस्मधारी च भस्मधारणसञ्चयः ।
स्नानसन्ध्यादिकं देवि लौकिकार्थं तु यश्चरेत् ॥ ७ ॥
विष्णुद्वेषपरो भूत्वा सर्वं प्र[4]कुरुते नरः ।
स पाषण्डेति कथितः शृणु कापालिक शिवे ॥ ८ ॥
कपालपात्रसम्भोजी मद्यमांसेषु तत्परः ।
स्त्रियोनिदर्शको नित्यं मुण्डमालाधरः सदा ॥ ९ ॥

[1] B क्ति। [2] C न्यार। [3] C चिन्मुक्तं, B D चित्युक्ते। [4] B सर्वत्र।

श्मशानाग्निप्रभोजी य स च कापालिक स्मृत ।
स च द्वादशधा प्रोक्तो महाकापालिक पर ॥ १० ॥
स्नानदानादिरहित शौचाशौचविवर्जित ।
न जपो न तपस्या च न तस्य नियम क्वचित् ॥ ११ ॥
ईदृग्विधो भवेच्चीन सकलो निष्कलो द्विधा ।
जैन श्रृणु महादेवि[1] कमण्डलुधर सदा ॥ १२ ॥
जीव एव पर भोगी कर्त्ता हर्त्ता स एव हि ।
यदेव तत्सुख देवि तत्सुख स्वात्म[2]रूपकम् ॥ १३ ॥
स जैन कथितो देवि एव बौद्धादयो मता ।
केशलुञ्चका देवि तथा श्वेतपटा प्रिये ॥ १४ ॥
तथा रक्तपटा देवि तथा नीला[3]म्बरादय ।
बृहद्गुरुरिति ख्यातास्तथान्ये परमेश्वरि ॥ १५ ॥
अहिंसकास्तथान्ये च भेदा सक्षेपतो मता ।
मुद्राधिकारिणो देवि कथ्यन्ते श्रृणु साम्प्रतम् ॥ १६ ॥
ब्राह्मणैर्न[4] तथा कार्य्यं ब्राह्मण्य च विनश्यति ।
मुद्रा तु ब्राह्मणो धृत्वा रौरव नरक व्रजेत् ॥ १७ ॥
वेदैस्तु रहितो यो हि स मुद्राधारको भवेत् ।
मुद्रया सहितो यो हि स कथ ब्राह्मणो भवेत् ॥ १८ ॥
मुद्रा चतुर्विधा देवि चातुर्विध्य श्रृणु प्रिये ।
ब्राह्मणो भावयेद्देहे विष्णुभावप्रवृद्धये ॥ १९ ॥
क्षत्रियो रेखयेद्देहे वैश्यो मुद्रा प्रविन्यसेत् ।
शूद्राधमादिकाना च तप्तमुद्रा प्रकीर्त्तिता ॥ २० ॥
अत्यन्तभक्तियुक्तोऽपि भावयेन्न तु रेखयेत् ।
ब्राह्मणो रेखयेत् क्वापि बिम्बयेन्न कदा[5]चन ॥ २१ ॥

[1] N महेशानि । [2] D का स्व[*] । [3] D नाना[*] । [4] C ब । [5] D [*]च[*] ।

देवो भूत्वा यजेद्देव नादेवो देवमर्चयत् ।
तस्माद्विष्णुस्वरूपत्व स्वेऽस्मिन् भाव्य महेश्वरि ॥ २२ ॥
ततो जप प्रकुर्वीत तस्य सिद्धिर्भवेन्मनो ।
एवमेव महेशानि शैवादीना क्रमो भवेत् ॥ २३ ॥
शङ्खचक्राङ्कित[1] दृष्ट्वा सचैल स्नानमाचरेत् ।
त्रिशूल डमरु देवि ब्राह्मणो भावयेत्सदा ॥ २४ ॥
धारण शिवलिङ्गस्य त्रिनमुद्रादिधारणम् ।
द्विजस्तु वर्जयेदेनि सक्षेपादिह कीर्त्तितम्[2] ॥ २५ ॥
शक्तेरुपासको यस्तु स च शाक्त प्रकीर्त्तित ।
वैखानसादिदीक्षाद्यैर्युक्तो वैष्णव एव च ॥ २६ ॥
षडक्षराम्भवाद्यैस्तु युक्त शैव प्रकीर्त्तित ।
केवल शिवसपन्नस्त्वन्यदेवस्य निन्दक. ॥ २७ ॥
वीरशैवेति गदितो वीराख्य वैष्णव शृणु ।
केवल विष्णुनिरत सर्वदेवप्रनिदक ॥ २८ ॥
वीरवैष्णव इत्युक्त पापभाजौ नराधमौ ।
चन्द्रजापरतो यस्तु स च चान्द्रो महेश्वरि ॥ २९ ॥
सूर्यासक्तमना यस्तु स सौर परिकीर्त्तित ।
ब्रह्मणोपासको यस्तु स च स्वायम्भुवो मत ॥ ३० ॥
दुर्गाचण्डया[3]दिसयुक्त स च दौर्ग प्रकीर्त्तित ।
वेदमूला क्रिया सर्वा वेदमूला परा स्मृति ॥ ३१ ॥
वेदेन रहित यत्तु तन्न कुर्याद्द्विज कचित् ।
वेदमार्गरतो नित्य ब्राह्मणो भवति ध्रुवम् ॥ ३२ ॥
वेदेन रहितो यस्तु स चाण्डाल प्रकीर्त्तित ।
स्वस्वधर्म्म पुरस्कृत्य सर्वं कार्य्यं महेश्वरि ॥ ३३ ॥

[1] C य॰ । [2] D ॰कृतं । [3] B कथ्यते । [4] C ॰न्द्या॰ ।

स्वधर्मनिरतो नित्यं सुखमाप्नोति निश्चितम् ।
स्वधर्मरहितो विप्रः सुत[1]हारी द्विजाधमः ॥ ३४ ॥
तं दृष्ट्वा तु महेशानि प्राजापत्यं समाचरेत् ।
तदभावे महेशानि सचैलं जलमाविशेत् ॥ ३५ ॥
तस्मान्मुद्रादिकद्वेषं ब्राह्मणो वर्जयेत् सदा ।
अधमानुग्रहार्थं तु मुद्रा प्रोक्ता मया तव ॥ ३६ ॥
सत्यं सत्यं महेशानि किमन्यत् श्रोतुमिच्छसि ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि विष्णुभेदान् शिवस्य च ॥ ३७ ॥

श्रीशिव उवाच ।

वैखानसो भवेदादौ श्रीराधावल्लभस्तथा ।
गोकुलेशो महेशानि तथा वृन्दावनी भवेत् ॥ ३८ ॥
पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः ।
रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि ॥ ३९ ॥
ततो भागवतो देवि दशभेदाः प्रकीर्त्तिताः ।
शिखी[2] मुण्डी जटी चैव द्वित्रिदण्डी क्रमेण च ॥ ४० ॥
एकदण्डी महेशानि वीरशैवस्तथैव च ।
सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः ॥ ४१ ॥
एतेषां वासनां देवि शृणु यत्नेन शाम्भवि ।
वेवेष्टि सर्वं संव्याप्य यस्तिष्ठति स वैष्णवः ॥ ४२ ॥
वैखानसादिदीक्षाचैर्भूषितः स्मार्त्तवैष्णवः ।
श्रीराधावल्लभं देवि शृणु यत्नेन शाम्भवि[3] ॥ ४३ ॥

[1] B °ता°। [2] BC °खा। [3] BC °हरि।

वैष्णवाचारनिरतो विष्णुतंत्रैकपारगः ।
अनन्यचेताः शान्तात्मा[2] विष्णुचिह्नपरायणः ॥ ४४ ॥
श्रीराधावल्लभो[3] देवि गोकुलेशं शृणु प्रिये ।
नानाभूषणसंपन्नो नानासौगन्धभूषितः ॥ ४५ ॥
गवां कुलं प्रीणयिता कलि[4]कृष्णस्वरूपधृक् ।
शरीरमर्थं प्राणांश्च तन्निवेदनकारकः ॥ ४६ ॥
अन्तःशक्तिपरो देवि बहिर्वैष्णवरूपधृक् ।
गन्धर्वाचारनिरतो लतावेष्टनतत्परः ॥ ४७ ॥
सम्प्रदायो गोकुलेशः सर्वसिद्धिकरो भुवि ।
वृन्दावनाख्यं देवेशि शृणु यत्नेन साम्प्रतम् ॥ ४८ ॥
विगताशः[5] प्रसन्नात्मा विष्णुभक्तिपरायणः ।
कामिनीसङ्गचपलो वनक्रीडाविनोदधृक् ॥ ४९ ॥
सौगन्धभूषिततनुः स्त्रीध्यानैकपरायणः ।
विष्णुसारूप्यतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे ॥ ५० ॥
पाञ्चरात्रो महेशानि तथैव वीरवैष्णवः ।
पूर्वमेव महेशानि कीर्त्तितः परमेश्वरि ॥ ५१ ॥
"रा" शक्तिरिति विख्याता "म" शिवः परिकीर्त्तितः ।
तदानन्दी शान्तचित्तः प्रसन्नात्मा विचारधृक् ॥ ५२ ॥
सर्वत्र समरूपश्च रामानन्दी[6] प्रकीर्त्तितः ।
हरिव्यासं महेशानि यथावदवधारय ॥ ५३ ॥
पापसंहारणे शक्तो[7] विष्णुभक्तो जितेन्द्रियः ।
यमादिनियमैर्युक्तस्त्व[8]क्ताचारपरायणः ॥ ५४ ॥
सोपयोगफलग्राही परकार्यपरायणः ।

[1] C °मं°। [2] D शान्तो यो। [3] B °भां। [4] B काले। [5] D °शा।
[6] B °न्दो। [7] C प्रोक्तो। [8] C °मु°।

हरिव्यासी[1] महेशानि शिवशक्तिस्वरूपधृक्[2] ॥ ५५ ॥
निंबार्काख्य सम्प्रदाय शृणु यत्नेन साम्प्रतम् ।
नित्यार्चनक्रमासक्त स्वतन्त्रैकपरायण· ॥ ५६ ॥
बाह्यपूजादिनिरतोऽनन्यभक्त प्रसन्नधी ।
आर्यपक्षान्वित: स्वच्छ° स्वच्छन्दाचारतत्पर ॥ ५७ ॥
स्वतन्त्र स्मार्त्तविद्वेषी निम्बार्को भगवान् हरि ।
अथ भागवत देवि कथ्यते शृणु साम्प्रतम् ॥ ५८ ॥
विष्णुभक्तौ च निपुणो विजितात्मा प्रसन्नधी: ।
स्मार्त्तकर्मान्वितो देवि तदन्याचारतत्पर ॥ ५९ ॥
आर्य्यपक्षान्वितो देवि तथा चारण[4]वेषधृक् ।
शैवद्वेषी तस्य सङ्गात् पुन स्नानपरायण ॥ ६० ॥
केवल विष्णुचित्त[5]ज्ञ प्रोक्तो भागवत शिवे ।
तेषा व्रता[6]दिकाना तु निर्णय कथ्यते क्रमात् ॥ ६१ ॥
एकादशी सदोपोष्या भक्तियुक्तेन चेतसा ।
एकादश्यामहोरात्र न भोक्तव्य कदाचन ॥ ६२ ॥
मुहूर्त्तविद्वा दशमी ततो[7] रौद्रीसमागम ।
तस्या तिथौ न भोक्तव्य दशम्या भोजन चरेत् ॥ ६३ ॥
सूर्य्योदयमभि[8]व्याप्य या तिथिर्याति पार्वति ।
सा तिथि सकला ज्ञेया तत्तिथ्युक्त समाचरेत् ॥ ६४ ॥
आद्या शैवेति विख्याता द्वितीया मोहि[9]नी भवेत् ।
द्वाभ्या विन्ध्य[10]मुपोष्यैव सर्वपापै प्रमुच्यते ॥ ६५ ॥
द्विधा तीर्थयेदा देवि तेदद परिकीर्त्तितम् ।
यद्यप्येकादशी पूर्णा द्वितीयेऽह्नि न विद्यते ॥ ६६ ॥

[1] B °वशो । [2] B °भक्तिपरायण [3] B पक्ष । [4] C °ब्राह्मण°, D स्वरूप° । [5] B °तत्त्व° । [6] D तत्त्वा° । [7] C °नौ । [8] C °धि° । [9] B °द° । [10] B D तुस° ।

द्वितीये वृद्धिदा देवि द्वादशी यदि दृश्यते ।
द्वितीये समुपोष्यैव सर्वपापैः प्रमुच्यते ॥ ६७ ॥
स्मार्त्तानां मतमाख्यातं वैखानसमतं शृणु ।
एकादश्यां तु यः कश्चित् प्रमादात् भोजनं चरेत् ॥ ६८ ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ।
कोट्यर्बुदं सन्निवसेत् रौरवे नरके प्रिये ॥ ६९ ॥
गोकुलेशमतं देवि कथ्यते शृणु साम्प्रतम् ।
स्मार्तवैष्णवयोर्मध्ये विवादो हि महानयम् ॥ ७० ॥
परस्परं प्रशंसन्ति निन्दन्ति च परस्परम् ।
ते मूढा नैव जानन्ति पाषण्डशास्त्रमोहिताः ॥ ७१ ॥
विष्णुरूपधरः शम्भुः शम्भुरूपधरो हरिः ।
अत्रार्थे प्रत्ययो देवि रुद्रा एकादश स्मृताः ॥ ७२ ॥
विष्णु[1] मिलित्वा देवेशि द्वादशी परिकीर्त्तिता ।
एकादशी तु रुद्रस्य द्वादशी श्रीपतेः स्मृता ॥ ७३ ॥
कलामात्रान्विता[2] वृद्धा मुहूर्त्तसंयुतापि चेत् ।
गोकुलेशमतं प्रोक्तं गोपालसुन्दरी प[3]रः ॥ ७४ ॥
पूर्णामेकादशीं प्राप्य द्वादश्या समुपोषणम् ।
स्मार्त्तद्वेषपरो भूत्वा प्रमादाद्यः समाचरेत् ॥ ७५ ॥
एकादशी हानिदा स्यात् पुत्रायुर्धननाशिनी ।
स्मार्त्तद्वेषपरो भूत्वा एकादश्यां तु भोजनम् ॥ ७६ ॥
पाषण्डमतमाश्रित्य सूर्य्यारुणकलार्थतः ।
पक्षमाश्रित्य देवेशि यः करोति नराधमः ॥ ७७ ॥
कोट्यर्बुदयुगं देवि नरके निवसेद्ध्रुवम् ।
विष्णुद्वेषपरो भूत्वा रोहिण्या भोजनं चरेत् ॥ ७८ ॥

[1] C °ष्णुं । [2] C D °मितं । [3] N °पु° ।

स दरिद्री महापापी तस्य पातो भविष्यति ।
अरुणोदयवेधस्तु श्रीनिम्बार्कमतं मतम् ॥ ७९ ॥
सूर्य्योदयाख्यवेधो हि श्रीवैखानस[1]सम्मतम् ।
कलावेधो महेशानि वैष्णवानां प्रकीर्त्तितः ॥ ८० ॥
मुहूर्त्तवेधो देवेशि स्मार्त्तानां परिकीर्त्तितः ।
अथात्र पाञ्चरात्राणां आद्य[2]पक्षः[3] प्रकीर्त्तितः ॥ ८१ ॥
कल्पितं वेधमाश्रित्य द्वादशीं कल्पयन्ति च ।
न लज्जन्ति च ते मूढाः प्रोक्तास्ते यमकिङ्कराः ॥ ८२ ॥
**सुरेन्द्रसंहिता** देवि तथा **पद्शाम्भवः** शिवे ।
**गोपालपाञ्चरात्रं** च **पडन्वयमतं** तथा ॥ ८३ ॥
**श्रीगोपीपरिशिष्टं** च **मोहशक्तीश्वरस्तथा** ।
**पद्शाम्भवरहस्यं** च क्रमादेते प्रकीर्त्तिताः ॥ ८४ ॥
एतद्ग्रन्थ[4]क्रमाद्देवि विवेचनमुदीरितम् ।
अथ पाशुपतानां च वासनां शृणु पार्वति ॥ ८५ ॥
शिखिपाशुपतो देवि शिखासूत्रधरः शुभः[5] ।
समाधितत्परो देवि समाधौ शिव[6]पीठधृक् ॥ ८६ ॥
रुद्राक्षं च तथा भस्म लिंगं शैवा[7]भिधं शिवे ।
प्रसन्नात्मा शान्तचित्तो ब्रह्मचारी प्रकीर्त्तितः ॥ ८७ ॥
मतं श्रीबिन्दुमालिन्याः समाश्रित्य प्रतिष्ठति[8] ।
मुण्डी त्रिशद्विधो देवि **तारामूक्ते** प्रकाशितः ॥ ८८ ॥
तत्र पाशुपताचारसम्पन्नो मुण्डितो भवेत् ।
जटी पाशुपतो देवि सोऽपि दशविधः स्मृतम् ॥ ८९ ॥
त्रिजटैकजटाधारी तथा बहु[9]जटाधरः ।

नग्नस्तपस्वी शान्तात्मा देहक्लेशपरायणः ॥ ९० ॥
क्रमत्रितयसम्पन्नो जटी पाशुपतः स्मृतः ।
द्विदण्डी तु महेशानि वाङ्मनोदण्डसंयुतः ॥ ९१ ॥
कायवाङ्मनसो[1] दण्डस्त्रिदण्डी परिकीर्त्तितः ।
वीरशैवः प्रसिद्धोऽत्र पूर्वमेव प्रकाशितः ॥ ९२ ॥
सर्वोत्तमो भवेच्छैवः शाम्भवः परिकीर्त्तितः[2] ।
चतुर्दशीव्रतासक्तः प्रदोषव्रततत्परः ॥ ९३ ॥
शनिप्रदोषे[3] देवेशि महाव्रतपरायणः ।
दारिद्र्यदहनं नाम व्रतमेतत्प्रकीर्त्तितम् ॥ ९४ ॥
कृष्णपक्षे विशेषेण शुक्लपक्षेऽपि पार्वति ।
अष्टमीसप्तमीसन्धौ[4] प्रदोषव्रतमीरितम्[5] ॥ ९५ ॥
एतद्व्रतसमायुक्तः शिवपूजापरायणः ।
शनिप्रदोषे सम्प्राप्ते शकुनं संशृणु प्रिये ॥ ९६ ॥
शनिवारे सोमवारे पुस्तकं चाभिमंत्रयेत् ।
आदित्यवासरे देवि राशि[6] काममि[7]तां चरेत् ॥ ९७ ॥
यत्रादौ दीय[8]ते देवि स चाध्यायः प्रकीर्त्तितः ।
द्वितीये दशको देवि तृतीये श्लोकसंख्यता ॥ ९८ ॥
दशकाध्यायतो देवि सर्वेभ्यो विनियोजनम् ।
कुमारीं प्रार्थ्य यत्नेन सपुष्पफलसंयुताम् ॥ ९९ ॥
स्थापयेद्रागिमध्ये तु दर्पणोदरसन्निभे ।
गोमयैरुपलिप्ते तु भूमौ स्वस्तिकमण्डले ॥ १०० ॥

[1] C °सा। [2] B C °वादी प्रकथ्यते। [3] B °पो। [4] D °विदे। [5] After this B D add द्वादशीत्रयमन्धौ ( D °सिद्धौ ) तु प्रदोषव्रतमीरितम्। which seems to be unnecessary for the context. [6] B C D °शि°। [7] C °म°। [8] D °प्य°।

कुमारीं पूजयित्वा च नवकन्याप्रभेदत ।
तत्र वाच्य[1] प्रयत्नेन भूत भव्य भविष्यकम् ॥ १०१ ॥
शुभाशुभादिक कर्म तथा षट्कर्मसाधनम् ।
षट्कर्म त्रिविध प्रोक्त यथावदवधारय ॥ १०२ ॥
वश्याकर्षस्तम्भन च विद्वेषोच्चाटन तथा ।
मारण चैव देवेशि विरूपाक्षस्य सम्मतम् ॥ १०३ ॥
वश्यस्तम्भनसम्मोहा मारणोच्चाटन तथा ।
विद्वेषण च देवेशि षट्कर्माणि विराण्मते ॥ १०४ ॥
शान्तिस्तम्भौ वशीकारो मारणोच्चाटने तथा ।
द्वेषण चेति देवेशि षट्कर्माणि यथाक्रमात् ॥ १०५ ॥
यस्मिन् विद्याविधौ देवि यत्कर्म परिकीर्त्तितम् ।
तत्कर्माणि[2] समारभ्य षट्कर्माणि जगु प्रिये ॥ १०६ ॥
बगलेशी तथा वश्ये बगला स्तम्भने तथा ।
वश्ये पञ्चदशी प्रोक्ता वशीकारस्त्रिधा भवेत् ॥ १०७ ॥
आदौ प्रीतिर्महेशानि मोहन तु द्वितीयकम् ।
वशीकारस्तृतीय स्यात् त्रितय त्रितय त्रिषु ॥ १०८ ॥
एके जाते महेशानि त्रितय जायते शिवे ।
शनिप्रदोषगाश्रित्य स्थाने शैवविभूषिते ॥ १०९ ॥
पश्चिमाभिमुख लिङ्ग नन्दिहीन पुरातनम् ।
चतुर पञ्चक्रोशान्ते न लिङ्ग दृश्यते शिवे ॥ ११० ॥
तदेकलिङ्गमाख्यात तत्र सिद्धिरनुत्तमा ।
ऊर्ध्वपुण्ड्र त्रिपुण्ड्र वा पट्टबन्ध[3]नमेव च ॥ १११ ॥
अगस्तिपत्राकार वा स्त्रीणा शून्य[4]करेण[5] च ।

[1] D वाह्य। [2] B °र्मभि, D °र्मादि। [3] B D °वर्ध°। [4] D हस्त°, B N सूत्र°। [5] B C D °क्रमेण।

द्वादशाष्टचतुर्योगात् ऊर्ध्वपुण्ड्रं प्रकीर्त्तितम् ॥ ११२ ॥
शिवविष्णुशिवायुक्तं त्रिपुण्ड्रं परमेश्वरि ।
शनिप्रदोषे धृत्वा तु शिवं पूज्य प्रयत्नतः ॥ ११३ ॥
भोजयेद्ब्राह्मणान् देवि अकाण्डादिदमीरितम् ।
गोपनीयं रहस्यं च किमन्यत् श्रोतुमिच्छसि ॥ ११४ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे प्रदोषविधिर्नामाष्टमः पटलः ॥ ८ ॥

## नवमः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
पूजाद्रव्य महादेव सम्प्रदायत्रये वद[1] ॥ १ ॥

श्रीशिव उवाच ।

षड्दर्शने षडाम्नाये महाविद्याविधौ शिवे ।
पञ्चायतनके देवि शिवशक्तियुतेऽपि च ॥ २ ॥
अथ गोपालक[2]हरी गणेश[3]शङ्करौ तथा ।
हयग्रीवो रामचन्द्र काल काली महेश्वरि ॥ ३ ॥
तारागणपतिश्चैव तारावटुक एव च ।
आद्यन्त[4]क्रमयोगेन द्विधा भेद प्रकीर्तित ॥ ४ ॥
एतेषा सुन्दरीयोगात् यत्र शृणु महेश्वरि ।
मूलयन्त्र समुद्धृत्य तत्र बिन्दौ महेश्वरि ॥ ५ ॥
देवयन्त्र[5] साङ्गक[6] तु भावयेद्यतमानस ।
विद्यायन्त्रे यथा पूर्वौ देवयन्त्रेऽथ वा पुन ॥ ६ ॥
पूजनीया महेशानि गोपालसुन्दरी परा ।
पूर्वोक्तानां समस्ताना पूजायत्र प्रकीर्त्तितम् ॥ ७ ॥
एवमेव तु सर्वेषा कथित तु तृतीयकम्[7] ।
आदौ यदुच्चरेद्देवि तद्यत्र पूजयेद्वरम्[8] ॥ ८ ॥
शक्तिर्वा शिवमन्त्रो वा यस्य चोच्चारण भवेत् ।
तस्य यन्त्र पूजयेत्तु सक्षेपात् गदित मया ॥ ९ ॥

वपद् । [2] C °ल° । [3] D °णप° । [4] D °यन्ते । [5] C °पत्र ।
देत । [7] B °के । [8] C °रं ।

विरूपाक्षमते तारे[1] पत्रे यंत्रं तु संलिखेत् ।
सुन्दरी भैरवी देवी तथैव कालसुन्दरी ॥ १० ॥
सुन्दरी काल इत्युक्तः सुन्दरी गोप इत्यपि ।
इति संक्षेपतः प्रोक्तं द्रव्यभेदं शृणु प्रिये ॥ ११ ॥
केरलश्चैव काश्मीरो गौडश्चैव तृतीयकः ।
शिवशक्तितादद्वयचं सप्तपर्य्यायभेदतः ॥ १२ ॥
चतुरशीतियुग्मेन नाथत्रितयमार्गतः ।
ओघत्रयक्रमेणैव वटवासिक्रमेण च ॥ १३ ॥
दशविद्यागुरुत्वेन भेदबाहुल्यमीरितम् ।
दुग्धं वृन्ताकफं देवि सूरणस्तु तृतीयकः ॥ १४ ॥
दुग्धसारं कुमारी च पञ्चतत्त्वानि वै जगुः[2] ।
आत्मविद्या शिवाख्या च सर्वं पूर्ण[3]क्रमेण च ॥ १५ ॥
काश्मीरे लशुनश्चैव ताम्रे गव्यं प्रदापयेत् ।
पिण्याकं तु द्वितीयं च गृञ्जनं तु तृतीयकम् ॥ १६ ॥
चतुर्थं पायसं दुग्धं पञ्चमं मि[4]थुनं भवेत् ।
पञ्चानुकल्पा देवेशि काश्मीराख्यक्रमे मताः ॥ १७ ॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
मकाराः पञ्च वै[5] ख्याता गौडमार्गे महेश्वरि ॥ १८ ॥
सामान्यत्वेन कथितं विशेषं शृणु सादरम् ।
दुग्धानुकल्पमद्यैश्च पूजयेच्च यथाक्रमात् ॥ १९ ॥
दुग्धेन केरले पूजा काश्मीरे भावना मता ।
गौडे प्रत्यक्षदानं स्यात् त्रितयं कीर्त्तितं मया ॥ २० ॥
जलाङ्गगुणं देवि शीतलं जलमीरितम् ।

1 D तावत् । 2 B द्विज, D तत्त्वानि तानि वै यतः । 3 D पूर्वपूर्व ॰ ।
4 D मै ॰ । 5 B C D त्रि ॰ ।

ततः शतगुणं प्रोक्तं सौगन्धि जलमत्र तु ॥ २१ ॥
जलात् शतगुणं प्रोक्तं दधि चात्र महेश्वरि ।
ततः शतगुणं दुग्धं ततः शतगुणं घृतम् ॥ २२ ॥
घृताच्छतगुणं तैलं तैलाच्छतगुणं मधु ।
ततः शतगुणा सवित् ततः शत[1]गुणं मधु ॥ २३ ॥
उत्तरोत्तरतौ गौडे केरले सद्गतिक्रमात् ।
शुद्धकेरलमार्गे तु जलेन पूजनं चरेत् ॥ २४ ॥
चैतन्यकेरले देवि शीतलेन जलेन च ।
ऋक्केरले महेशानि सौगन्धिजलतोऽर्चनम् ॥ २५ ॥
गुप्तकेरलमार्गे तु दुग्धेन पूजनं चरेत् ।
उग्रकेरलमार्गे तु नष्टदुग्धेन पूजनम् ॥ २६ ॥
पञ्चकं गदितं देवि शम्भुतो भैरवान्त[2]कम् ।
पञ्चके त्रितयं देवि त्रितयं त्रितयं त्रिषु ॥ २७ ॥
शुद्धकाश्मीरमार्गे तु द्रव्यस्य भावना मता ।
ऋक्काश्मीरे नवजलमुग्राख्ये[3] ह्यनुकल्पनम् ॥ २८ ॥
क्रूरकाश्मीरमार्गे तु नष्टद्रव्यानुकल्पनम् ।
गुप्तकाश्मीरमार्गे तु गुडार्द्रकरसः स्मृतः ॥ २९ ॥
अथर्वाख्ये तु काश्मीरे ताम्रपात्रे मधु स्मृतम् ।
काश्मीरः कथितो देवि गौडमार्गं शृणु प्रिये ॥ ३० ॥
शुद्धगौडे महेशानि विजया दुग्ध[4]मीरितम् ।
ऋग्गौडे तु महेशानि विजया मधुसंयुता ॥ ३१ ॥
यजुर्गौडे महेशानि तत्पाको[5] विनिर्वियताम् ।
गुप्तगौडे महेशानि तत्कल्पः परिकीर्तितः ॥ ३२ ॥

[1] B °तो दश° । [2] N °दि° । [3] D मयार्थे । [4] D मदिरादान° ।
[5] D °स्त्य ।

उग्रगौडे महेशानि मदिरादानमीरितम् ।
देवतार्थं तु सम्प्रोक्तं नान्यकर्मणि[1] योजयेत् ॥ ३३ ॥
सर्वातिरिक्तो देवेशि निरालाख्यः प्रकीर्तितः ।
निरालाख्ये सम्प्रदाये स्वयमस्ति सदाशिवः ॥ ३४ ॥
हार्दबाह्यप्रभेदेन द्विविधश्च च पार्वति ।
चातुर्वर्ण्यानुयोगेन योजनीयः प्रयत्नतः ॥ ३५ ॥
ब्राह्मणेन तथा कार्यं ब्राह्मण्यं न विनश्यति ।
ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयते ॥ ३६ ॥
ब्राह्मणस्त्वनुकल्पं च दत्त्वा चाण्डालतामियात् ।
मांसभक्षी द्विजो यस्तु वेदबाह्यो तथा स्मृतः ॥ ३७ ॥
तथैव वेदबाह्यो हि स द्विजः परिकीर्तितः ।

श्रीदेव्युवाच ।

अनुकल्पादिकं प्रोक्तं[2] सन्देहोऽस्ति मम प्रभो ॥ ३८ ॥
पञ्चामृतादौ देवेश कथं दुग्धादिकल्पना ।

श्रीशिव उवाच ।

ताम्रं गव्यं मधुसमं दैवे पित्र्ये न दुष्यति ॥ ३९ ॥
अत एव महेशानि होमे ताम्रं प्रगृह्यते ।
पूनाद्रव्यं तु सामान्याद्गौडकाश्मीरयोः शृणु ॥ ४० ॥
घृतं दुग्धं च देवेशि नवनीतं च तक्रकम् ।
दधिखण्डं नष्टदुग्धं मधु चैव मधूत्कम् ॥ ४१ ॥
तैलं गुडार्द्रकं देवि मधु सम्मिश्रितं च ।
दुग्धं सलवणं चैव दधि दुग्धं तथैव च ॥ ४२ ॥

[1] C °कर्म । [2] B प्राप्त ।

सनिद्दुग्ध तस्य पाक केवला विजया च वा ।
जातीपत्र तत्फल च म्लेच्छ दिव्यमथापि वा ॥ ४३ ॥
नारिकेलोदक कास्ये ताम्रे गव्य महेश्वरि ।
अहिफेन धूर्त्त[1]पुष्प वनज नखज जलम् ॥ ४४ ॥
धूर्त्त[2]बीज वत्सनाभ तथैव शीतल जलम् ।
मृत्युभीया वत्सनाभ धूर्त्तबीज विवर्जयेत् ॥ ४५ ॥
त्रयोदशविधा देवि मदिरा गौडसम्मता ।
अरिष्टासवसीध्वादिभेदेन परमेश्वरि ॥ ४६ ॥
सविदुग्धो[3]ऽहिफेन च जातीकोषलवङ्गकम् ।
चन्द्रशीतलनीरै[4]श्च योगिनीपानमुत्तमम् ॥ ४७ ॥
लवणार्द्रकपिण्याक गोधूम मासपञ्चकम् ।
लशुन गृञ्जन देवि कलिङ्ग बिल्वक तथा ॥ ४८ ॥
कपित्थ[5] द[6]ग्धकूर च तथैव द[7]ग्धपायसम् ।
पलाण्डुगोस्तनीकादि दशक वारुणीभवम् ॥ ४९ ॥
अन्युप्रविद्या[8]विषये द्रव्याण्येतानि साधक[9] ।
वीरसाधनकार्य्ये तु देवि द्रव्याणि चार्पयेत् ॥ ५० ॥
वेदमूला क्रिया सर्वा ब्राह्मणो वेद एव च ।
प्राणा वर प्रगच्छन्तु ब्राह्मणो नार्पयेत्सुराम् ॥ ५१ ॥
ताम्रे मधु सुरातुल्य घृतेन वर्जित यदि ।
नारिकेलोदक कास्ये काञ्जिका कूरसम्भवा ॥ ५२ ॥
हार्दबाह्यप्रभेदेन पूर्वसिद्धिसमस्तकम् ।
द्वितीये भावनामात्र पूर्वं वै कथित शिवे ॥ ५३ ॥
लताजपे तथा पूजाद्रव्य[10]दाने महेश्वरि ।
केरले भावना कृत्वा दृष्ट्वा चैव जपेत्सदा ॥ ५४ ॥

[1] D धुस्तु°। [2] D धुस्तु°। [3] D दधिगुडो°। [4] C N °लै°। [5] C °थित।
[6] B N दु°। [7] B दु°। [8] D °ग्र°। [9] C मामक, N मारक। [10] D N °व्या°।

काश्मीरे वा वृता[1]सङ्गः जपपूजादिकं चरेत् ।
गौडे यथोक्तविधिना जपं कुर्य्यान्महेश्वरि ॥ ५५ ॥
त्रितयं कथितं देवि रहस्यातिरहस्यकम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५६ ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि पूर्वं संसूचितं[2] च यत्[3] ।
तन्मे वद महादेव यद्यहं तव वल्लभा ॥ ५७ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथ्यते शृणु साम्प्रतम्[4] ।
मेरुस्तु त्रिविधः प्रोक्तः सामान्यत्वेन पार्वति ॥ ५८ ॥
न्यासमेरुर्यन्त्र[5]मेरुरग्निमेरुस्तथैव च ।
प्रत्येकं त्रितयत्वेन[6] त्रयाणां विद्धि पार्वति[7] ॥ ५९ ॥
न्यासमेरुर्यं[8]त्रमेरुः प्रत्येकं द्विविधो मतः ।
बाह्याभ्यन्तरभेदेन द्विविधत्वं प्रकीर्तितम् ॥ ६० ॥
न्यासमेरुस्त्रिधा देवि[9] शृणु त्वं यत्नतः शिवे ।
मेरुप्रस्तारन्न्यासस्तथा कैलाससञ्ज्ञकः[10] ॥ ६१ ॥
भूप्रस्तारस्तृतीयः स्याद्यान्तरत्वाच्चतुर्विधः ।
यन्त्रमेरुस्तथा देवि षड्विधः परिकीर्तितः ॥ ६२ ॥
न्यासे तु बाह्यन्यसनं मन्त्र[11]स्तु भावना मता ।
यन्त्रे तु लेखनं बाह्ये मानसी[12] भावना मता ॥ ६३ ॥

[1] D वा तया°, C वार्त्तया°, B वार्त्तका° । [2] D N °सिचित । [3] N मया ।
[4] B °पार्वति । [5] D °मन्त्र° । [6] C D °त्वं च । [7] B साम्प्रत । [8] D °मं° ।
[9] B °भेद । [10] D °शङ्कर । [11] D यन्त्र°, B अन्त° । [12] C D °से ।

लयमेरुर्योगमेरुर्नादमेरुस्तृतीयक ।
योगवीणाख्यमेरुस्तु तुरीय[1] परिकीर्त्तित ॥ ६४ ॥
कन्यामेरु[2] पञ्चम स्यात् पञ्चैते मेरव स्मृता ।
वह्निमे[3]रु पञ्चधा स्याद्बाह्याभ्यन्तरतो दश ॥ ६५ ॥
मन्त्रमेरुर्वर्णमेरुर्द्वाविंतौ तारिणीमते[4] ।
वर्णमेरौ तु कोष्ठानि शतभेदेन सतति ॥ ६६ ॥
चतु.शृङ्गाह्वये मेरौ वर्णा सर्वे प्रतिष्ठिता ।
अन्ये ससूचिता देवि तत्राग्निमेरव शृणु ॥ ६७ ॥
वह्निमेरोर्लक्षणानि शृणु यत्नेन साम्प्रतम् ।
चत्वारिंशत्तथाष्टौ च कुण्डानि कारयेत् प्रिये ॥ ६८ ॥
श्रीविद्याभेदयुक्ताना मेरु प्रोक्तस्त्वय शिवे ।
षोडश्युपासकानां तु शत कुण्डानि चन्द्रयुक् ॥ ६९ ॥
चतुश्चरणयुक्तानामष्टोत्तरशत शिवे ।
षट्शाम्भवप्रयुक्ताना कुण्डानि रश्मिसख्यया ॥ ७० ॥
मेधादीक्षादियुक्ताना मेरुस्त्वभ्यन्तरो मत ।
श्री[5]विद्योपास्तियुक्ताना मेरु सकथितो[6] मया ॥ ७१ ॥
श्रीविद्यारहितो यस्तु न मेरुसाधन चरेत् ।
श्रीविद्यारहितो यस्तु नाचार्य्यत्व प्रगच्छति ॥ ७२ ॥
पूर्णाभिषेकसयुक्तस्त्वाचार्य्य कीर्त्तितो मया ।
ऊर्द्ध्वाम्नायादिसयुक्तो द्वितीय परिकीर्त्तित ॥ ७३ ॥
पूर्णाभिषेकरहितस्त्वाचार्य्यत्व करोति य ।
तस्य नाश करिष्यामि योगिनीगणभूषित ॥ ७४ ॥
पूर्णाभिषेकरहिते मेरुससाधन नहि ।

[1] MSS तृतीय । [2] C N कल्पद्रुम । [3] C वह्निमे ° । [4] C भवे, N मता ।
[5] D नि ° । [6] B सकथ्यते ।

प्रमादान्मोहतो दम्भात्तस्य पा[1]तो भविष्यति ॥ ७५ ॥
दुर्भिक्षं राष्ट्रभङ्गं च पृथ्वीकम्पादिकं शिवे ।
जलाग्निवातसम्भूता बाधा तद्ग्रामगा भवेत् ॥ ७६ ॥
त्रि[2]वर्षैः पञ्चवर्षै[3]स्तु धूमकेतुर्भविष्यति ।
पद्मिनाडीमभिव्याप्य पलानि पञ्चविंशतिः ॥ ७७ ॥
अहि[4]केतुस्ततो भूयादरिकेतुस्तदुत्तरम् ।
घट[5]केतुस्ततो देवि ततश्चैव ध्वजाभिधः ॥ ७८ ॥
वर्षमात्रेण देवेशि तत्कुटुम्बं विनश्यति ।
वेदबाह्यो यथा देवि द्विजबाह्यास्तथा नरः ॥ ७९ ॥
कुटुम्बहा भवेत्सोऽपि प्रायश्चित्तेन शुद्ध्यति ।
तस्य संसर्गमात्रेण राज्यं नश्यति निश्चितम् ॥ ८० ॥
दीक्षितो यस्तु कुरुते तस्य शोभां शृणु प्रिये ।
अणिमाद्यष्टकं देवि वाक्सिद्धिः कामरूपता ॥ ८१ ॥
षष्ठिसिद्धीश्वरो भूत्वा शिवतुल्यो नरो भवेत् ।
स देशो धन्यतां याति प्रसन्नाः सर्वदेवताः ॥ ८२ ॥
पञ्चाङ्गो द्वादशाङ्गो तु विशेषं शृणु शाम्भवि ।
आदौ दृग्दीक्षणं कार्यं ततो वाग्दीक्षणं भवेत् ॥ ८३ ॥
स्पर्शदीक्षा ततः प्रोक्ता ततो[6] वर्णमयी भवेत् ।
ततः क्रियावती ज्ञेया ततः कला[7]वती भवेत् ॥ ८४ ॥
आणवी[8] तु ततो ज्ञेया ततः षडूर्मिनी भवेत् ।
पञ्चायतनदीक्षा स्यात् ततः श्रीपञ्चपञ्चिका ॥ ८५ ॥
ततः पूर्णाभिषेकः स्यात् षडाम्नायक्रमेण च ।
एवं मेधान्तसंयुक्तः शिव एव न संशयः ॥ ८६ ॥

[1] D घा°, B चा°। [2] D द्वि°। [3] B मासै°। [4] C °भि°। [5] N घात°।
[6] C °त्र°। [7] B काली°। [8] D अमरी।

पञ्चायतनपर्य्यन्तं द्वादशाम्ब्याधिकारिता ।
गायत्र्युपासका ये च पञ्चायतनदीक्षिता ॥ ८७ ॥
तै कार्य्यं[1] साधनं देवि पञ्चाग्निसूर्यसङ्गके ।
एका[2]ग्निरपि नन्दाग्नि[3]र्धूम्रपानं महेश्वरि ॥ ८८ ॥
जलाकाशाधिवासो हि तै कार्य्यं परमेश्वरि ।
गायत्र्यामपि सकार्य्यं तुर्य्याख्याया महेश्वरि ॥ ८९ ॥
नान्यत्र कार्य्यं देवेशि मरुससाधनं शिवे ।
रहस्यातिरहस्यं च कथ्यते चान्यदेव हि ॥ ९० ॥
न्यासे[4] यन्त्रे कामकलारूपसन्यसनं शिवे ।
तथाग्निमेरौ देवेशि चाङ्कुरारोपणं शिवे ॥ ९१ ॥
यथा कामकलाध्यानमङ्कुरारोपणं तथा ।
यथासनादिसंशुद्धिं तद्वद्वास्तु[5]प्रपूजनम् ॥ ९२ ॥
ततस्त्वन्त्या महेशानि चाधिकारी भवेद्ध्रुवम् ।
वास्तु विना य कुरुते तस्य नाशो भविष्यति ॥ ९३ ॥

श्रीदेव्युवाच ।

अथ वै सर्वमेरू[6]णां फलं किं[7] वद शङ्कर ।

श्रीशिव उवाच ।

न्यासमेरौ फलं देवि देहसिद्ध्यादिकं शिवे ॥ ९४ ॥
यन्त्रमेरौ फलं देवि त्रैलोक्यविजयादिकम् ।
अग्निमेरौ फलं देवि कथ्यते शृणु साम्प्रतम् ॥ ९५ ॥
त्रैलोक्यवशकारित्वं लोकसम्मोहनं शिवे ।
अदृश्यत्वं निस्पृहत्वं सौख्यञ्च परमेश्वरि ॥ ९६ ॥

[1] C निष्कार्य्यं । [2] D त्रेता° । [3] C पञ्चाग्नि । [4] C रस । [5] C °द्वन्द्व° ।
[6] N नन्दू° । [7] N मे ।

इन्द्रियाणां संयमनमग्निसेवनतो भवेत् ।
अग्निसंसेवनाद्देवि दारिद्र्यदहनं भवेत् ॥ ९७ ॥
वैराग्यञ्च वाक्पटुत्वं चिरजीवित्वमाप्नुयात् ।
यं यं कामयते कामं तत्तदाप्नोति निश्चितम् ॥ ९८ ॥
नानाचमत्कारकरः सर्वलोकेषु पूजितः ।
अग्नौ हुतं च दत्तं च तात्कालिकफलप्रदम् ॥ ९९ ॥
सदा चाग्निः सेवनीयः पुरश्चर्यारतैर्नरैः[1] ।
पुरश्चर्याविहीनस्य नेदं साधनमीरितम् ॥ १०० ॥
व्यसने सात्त्विको मेरुर्[2]यं[3]ने तु राजसो भवेत् ।
तामसस्तु महामेरुर्वह्निसंसेवनाद्भवेत् ॥ १०१ ॥
सात्त्विकेन विलम्बेन फलं भवति पार्वति ।
राजसे तु फलं माये किञ्चित् कालेन जायते ॥ १०२ ॥
तात्कालिकफलं देवि तामसे[4] सर्वदा[5] भवेत् ।
अधिकारादिकं दीक्षा तथा संज्ञादिकं शिवे ॥ १०३ ॥
फलादिकं तथा प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमद्दक्षिणकालीमहोग्रताराशिवसंवादे
मेरुसाधनं नाम नवमः पटलः ॥ ९ ॥

[1] C °मो° । [2] D °तेन वं । [3] C भाद्रो । [4] D °से । [5] C N °षा ।

## दशमः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि पूर्वोक्तं च रहस्यकम् ।

श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि मेरुप्रस्तारनिर्णयम् ॥ १ ॥
कथ्यते परमेशानि मूलमारभ्य पार्वति ।
एकाग्निं तु समारभ्य श्रीमेधान्तं महेश्वरि ॥ २ ॥
प्रस्तारः कथ्यते देवि पारम्पर्य्यक्रमेण च ।
एकाग्निसाधनं चादौ सूर्यसंज्ञाभिधः स तु ॥ ३ ॥
पञ्चाग्निश्च ततो देवि चतुःकुण्डानि कारयेत् ।
पञ्चमः सूर्य्यसञ्ज्ञः स्यान्नन्दा[1]ग्निं शृणु यत्नतः ॥ ४ ॥
अष्टौ कुण्डान्यष्टदिक्षु नवमः सूर्य्यसंज्ञकः ।
द्वादशाग्निस्ततो देवि कुण्डान्येकादश क्रमात् ॥ ५ ॥
द्वादशाग्निः सूर्य्यसंज्ञस्तत्क्रम शृणु पार्वति ।
दक्षिणे वेदकुण्डानि प्रत्यक्प्राग्वह्नियुग्मतः[2] ॥ ६ ॥
उत्तरस्यामेककुण्ड प्राक्प्रत्यग्व्यत्यये तथा ।
मेरुकुण्डानि देवेशि भेदद्वयक्रमेण च ॥ ७ ॥
चत्वारिंशत्तथाष्टौ च तेषां न्यसनमुच्यते ।
षट्कोणमादौ कृत्वा तु चाष्टकोण ततश्चरेत् ॥ ८ ॥
दशारं द्वा[3]दशारं च भुवनारक्रमेण तु ।
वस्वारयुग्मं षट्कोणं दशारं वसुयुग्मकम् ॥ ९ ॥

[1] C तत्रा॰ । [2] N ॰कम् । [3] C च॰ ।

वसु[1]मेरुर्निगदितो मध्यमं शृणु पार्वति ।
आदौ बिन्दुर्महेशानि चत्वरद्वितयं ततः ॥ १० ॥
तृतीयचत्वरे देवि चतुःकुण्डानि कारयेत् ।
चतुर्थचत्वरे देवि वसुकुण्डानि कारयेत् ॥ ११ ॥
बाणा[2]ख्यचत्वरे देवि कलाकुण्डानि[3] कारयेत् ।
अथ षष्ठचत्वरे तु कुण्डानां विंशतिश्चरेत्[4] ॥ १२ ॥
सप्तमचत्वरे देवि चतुर्विंशति कारयेत् ।
अष्टमे चत्वरे देवि चाष्टविंशति कारयेत् ॥ १३ ॥
सप्तकुण्डानि देवेशि सूर्यस्त्वेकोत्तरो मतः ।
एकोत्तरक्रमे[5] देवि महाकालमत शृणु ॥ १४ ॥
आदौ बिन्दुं प्रविन्यस्य द्वितीये कुण्डयुग्मकम् ।
तृतीये वेदसंख्यानि चतुर्थे ऋतुसंख्यकम् ॥ १५ ॥
पञ्चमे वसुसंख्यानि षष्ठे तु द्वादशैव तु ।
प्राक् प्रत्यक् च प्रकुर्वीत[6] दक्षवामे तु वेदकम् ॥ १६ ॥
दक्षवामेऽथवा देवि वसुकुण्डानि कारयेत् ।
प्राग्भा[7]गके तथा प्रत्यक् कारयेत् परमेश्वरि ॥ १७ ॥
गिरिसंख्याचत्वरे तु कुण्डविंशतिकं चरेत् ।
अष्टमे चत्वरे देवि कुण्डद्वाविंशतिं चरेत् ॥ १८ ॥
प्राच्यां तु गिरिसंख्यानि तत्साम्मुख्ये तु सप्त वै ।
दक्षे तु वेदसंख्यानि तत्साम्मुख्ये तु दक्षवत् ॥ १९ ॥
दक्षवामे च देवेशि गिरिसंख्यानि कारयेत् ।
तदा प्राच्यां प्रतीच्यां च वेदसंख्यानि कारयेत् ॥ २० ॥
एवं विलिख्य देवेशि कुण्डानि दिग्युगादियुक् ।

[1] C N वसु° । [2] C धारा° । [3] C चाष्टविंशति । [4] B N न्यसेत् ।
[5] N °मतं । [6] C °र्वन्ति । [7] D प्रत्या° ।

नवमे चत्वरे देवि षड्विंशति प्रकल्पयेत् ॥ २१ ॥
प्राच्यां तु वसुसख्यानि प्रतीच्यां वसुसख्यकम् ।
दक्षिणे बाणसख्यानि तूत्तरे दक्षवद्भवेत् ॥ २२ ॥
दक्षोत्तरेऽथवा देवि वसुसख्यानि कारयेत् ।
दक्षे तु वसुसख्यानि वसुसख्यानि वामके ॥ २३ ॥
प्राच्यां तु बाणसख्यानि तत्साम्मुख्ये तु पूर्ववत् ।
एव मिलित्वा जानीहि शतकुण्डानि पार्वति ॥ २४ ॥
एकोत्तराख्य[1] सूर्यो हि किमन्यत् श्रोतुमिच्छसि ।
कैलासाख्यक्रमेणाथ मेरु सकथितो मया ॥ २५ ॥
शृखलाख्यक्रमेणात्र कुण्डानि परिकल्पयेत् ।
शुद्धकुण्ड शक्तिकुण्ड शिवशक्त्यात्मक तथा ॥ २६ ॥
नवकुण्डीविधानेन कुण्डानि परिकल्पयेत् ।
निर्वाणदीक्षिते देवि त्वष्टोत्तरशतैर्भवेत् ॥ २७ ॥
प्रथमचत्वरे देवि श्रीबिन्दु पातयेत् प्रिये ।
द्वितीयचत्वरे देवि कुण्डत्रितयमाचरेत् ॥ २८ ॥
तृतीयचत्वरे देवि वेदकुण्डानि कारयेत् ।
चतुर्थचत्वरे देवि वसुकुण्डानि कारयेत् ॥ २९ ॥
बाणाख्यचत्वरे देवि कलासख्यानि[2] कारयेत् ।
ऋत्वाख्यचत्वरे देवि कुण्डविंशतिक चरेत् ॥ ३० ॥
ऋष्या[3]ख्यचत्वरे देवि तत्त्वसख्यानि कारयेत् ।
वस्वाख्यचत्वरे देवि द्वात्रिंशत्कुण्डसहति ॥ ३१ ॥
शत सप्त च कुण्डानि त्वष्टम सूर्य ईरित ।
अक्षोभ्यस्य मत देवि शृणु यत्नेन साम्प्रतम् ॥ ३२ ॥
बिन्दुस्थान भवेदादौ द्वितीये चत्वरे चरेत् ।

[1] B °ख्ये । [2] C चत्वारि । [3] C N गिर्व्या° ।

तृतीयचत्वरे देवि वेदकुण्डानि कारयेत् ॥ ३३ ॥
चतुर्थचत्वरे देवि वसुसङ्ख्यानि कारयेत् ।
रसाख्यचत्वरे देवि कलाकुण्डानि कारयेत् ॥ ३४ ॥
अथ षष्ठचत्वरे तु कुण्डविंशतिकं चरेत् ।
सप्तमचत्वरे देवि मर्म्मसङ्ख्यानि कारयेत् ॥ ३५ ॥
अथाष्टमे चत्वरे च द्वात्रिंशत्कुण्डसंहति ।
अथ नीलामते देवि नवचत्वरभेदत ॥ ३६ ॥
तत्रादिचत्वरे देवि विन्दुस्थानं प्रकीर्त्तितम् ।
द्वितीयचत्वरे देवि चन्द्रसङ्ख्यानि कारयेत् ॥ ३७ ॥
तृतीयचत्वरे देवि वह्निसंख्यानि कारयेत् ।
चतुर्थचत्वरे देवि वेदसङ्ख्यानि कारयेत् ॥ ३८ ॥
भूताख्यचत्वरे देवि वसुसङ्ख्यानि कारयेत् ।
रसाख्यचत्वरे देवि कलासङ्ख्यानि कारयेत् ॥ ३९ ॥
ऋष्याख्यचत्वरे देवि कुण्डाना विंशतिश्चरेत् ।
अष्टमचत्वरे देवि तत्त्वसङ्ख्यानि कारयेत् ॥ ४० ॥
नवमचत्वरे देवि द्वात्रिंशत्कुण्डसंहति ।
तृतीयमेरु वक्ष्यामि नवोत्तरक्रमे शिवे ॥ ४१ ॥
प्रथमचत्वरे देवि विन्दुस्थानं प्रकीर्त्तितम् ।
द्वितीयचत्वरे देवि पूर्ववत्क्रमसङ्ख्यकम् ॥ ४२ ॥
तृतीयचत्वरे देवि वेदसङ्ख्यानि कारयेत् ।
चतुर्थचत्वरे देवि रससङ्ख्यानि कारयेत् ॥ ४३ ॥
पञ्चमचत्वरे देवि वसुसङ्ख्यानि कारयेत् ।
षष्ठे देवि कलासङ्ख्यानि[1] द्विगुणं सप्तमे भवेत् ॥ ४४ ॥
अष्टमे तत्त्वसङ्ख्यानि मर्म्मसङ्ख्या तु द्[2]नके ।

[1] B दश[2] । [2] D च ।

नवोत्तरक्रमेणैव मेरूणा त्रितयं शिवे ॥ ४५ ॥
त्रयाणामधिकारोऽस्ति कलौ तु यस्य कस्यचित् ।
अधिकारविहीनस्य नेदं[1] साधनमीरितम् ॥ ४६ ॥
इति संक्षेपतः प्रोक्त कराळाख्यमतं श्रृणु ।
अष्टोत्तरशताख्यं तु मेरु संश्रृणु पार्वति ॥ ४७ ॥
आदौ बिन्दु विधायाथ ततः कुण्डत्रय चरेत् ।
तृतीयचत्वरे देवि कलासख्यानि कारयेत् ॥ ४८ ॥
चतुर्थचत्वरे देवि ऋतुसंख्यानि कारयेत् ।
बाणाख्यचत्वरे देवि वसुसंख्यानि कारयेत् ॥ ४९ ॥
ऋत्वाख्यचत्वरे देवि कलासख्यानि कारयेत् ।
गिरिसख्याचत्वरे तु विंशत्संख्यां तु कारयेत् ॥ ५० ॥
रध्राख्यचत्वरे देवि षड्विंशानि प्रकल्पयेत् ।
चतुर्विंशतिकुण्डानि पूर्ववत् कारयेत् प्रिये ॥ ५१ ॥
कुण्डयुग्म प्रकुर्वीत दक्षिणोत्तरतः शिवे ।
प्राक् प्रत्यक् वा प्रकर्त्तव्यं कुण्डयुग्म महेश्वरि ॥ ५२ ॥
अष्टमः सूर्य्यसङ्ग स्यादेवमष्टोत्तरं शतम् ।
रत्नगर्भक्रमेणैव मेरु श्रृणु[2] महेश्वरि ॥ ५३ ॥
आदौ बिन्दु प्रविन्यस्य द्वितीये कुण्डयुग्मकम् ।
पृष्ठाग्रतः पार्श्वतो वा कुण्डयुग्म प्रविन्यसेत् ॥ ५४ ॥
कुण्डत्रय तृतीये तु योनिवत्[3] विन्यसेच्छिवे ।
चतुर्थचत्वरे देवि ऋतुसंख्यानि कारयेत् ॥ ५५ ॥
बाणाख्यचत्वरे देवि वसुकुण्डानि कारयेत् ।
रसाख्यचत्वरे देवि कलाकुण्डानि कारयेत् ॥ ५६ ॥
मुनिसख्याचत्वरे तु कुण्डविंशतिकं चरेत् ।

[1] D नैव । [2] C ॰ ष्वङ्ग । [3] B ॰ नि वा ।

महाश्मशानं सञ्चिन्त्य तत्र देवीं विचिन्तयेत् ।
एवं यः कुरुते देवि होमद्रव्यं च देववत्[1] ॥ ६९ ॥
यत्प्राप्तं ऋतुभेदेन कालभेदेन पार्वति ।
पुष्पं फलानि धान्यानि यत्किञ्चिज्जगतीगतम्[2] ॥ ७० ॥
तत्तत्[3] होमयेद्देवि सर्वसिद्धीश्वरो भवेत् ।
आचार्यं तोषयेत्पश्चाद्गुरुं यत्नेन पूजयेत् ॥ ७१ ॥
ब्राह्मणान् पूजयेत् पश्चात्[4] स्वर्णरत्नाम्बरादिभिः ।
अष्टाष्टकं चरेत्तत्र सर्वसिद्धीश्वरो भवेत् ॥ ७२ ॥
दुन्दुभीनां द्वादश तु द्वारि कोणे प्रवादयेत् ।
नानावादित्रघोषाद्यैश्चतुर्विंशतिवाद्यतः ॥ ७३ ॥
गन्धर्वनीत्यैव वा कृत्वा सिद्धीश्वरो भवेत् ।
प[5]ट्पारायणमासाद्य सर्वसिद्धीश्वरो भवेत् ॥ ७४ ॥
ब्रह्माण्डगोलके याश्च याः काश्चिज्जगतीतले ।
समस्ताः सिद्धयो देवि तस्य पादगता भवेत् ॥ ७५ ॥
रहस्यातिरहस्यं च गोपनीयं स्वयोनिवत् ।
सपताका[6]दुन्दुभिर्वा गले[7] धारणयोगतः[8] ॥ ७६ ॥
शक्रक[9]र्ता भवेत् सोऽपि धनदः किङ्करो गृहे ।
इति सक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥ ७७ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
मेरुकथनं नाम दशमः पटलः ॥ १० ॥

[1] D दैवनम् । [2] B ° तले । [3] D ° च C तदन्न । [4] D N मोनयेत् वत्ना ° ।
[5] C स । [6] D सपेतका, C सा पताका । [7] C रणे । [8] C ° वत् ।
[9] D सवकत्ता, सक्तोऽपि ।

## एकादशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

श्रीशिव उवाच ।

रहस्य कथ्यते देवि शृणु सावहिता भव ॥ १ ॥
दलाकाराणि सर्वाणि कुण्डानि कारयेत् प्रिये ।
किंवा श्रीचक्रवत्कार्य्यं तत्क्रम शृणु पार्वति ॥ २ ॥
चत्वरा नव वै कार्या प्रथमे बिन्दुसद्मम ।
तत्र त्रिकोण कर्त्तव्यमष्टार तदनन्तरम् ॥ ३ ॥
ततो दशार देवेशि द्वितीय च दशारकम् ।
मन्वस्र च[1] तत कार्य्यं ततो नागदल शिवे ॥ ४ ॥
षोडशाख्यदल देवि ततो वृत्तत्रय[2] लिखेत्[3] ।
चतुर्द्वारोपशोभाढ्य[4] श्रीचक्र मेरुरूपकम् ॥ ५ ॥
क्रमात् क्रमादुन्नत तु कृत्वा विरचयेत् सुधी ।
तत्रोपरि महेशानि मण्डप रचयेत्तत ॥ ६ ॥
नव कुण्डानि जायन्ते तत्रैव क्रमश[5] शिवे ।
तत्राग्निं चैव प्रज्वाल्य सुन्दरीध्यानपूर्वकम् ॥ ७ ॥
तदायुधविभूषाढ्य[6] मेरु श्रीसर्वतोमुखम् ।
महामेरुरय[7] देवि दलाकार तु कारयेत् ॥ ८ ॥
नि सप्तसु[8] दलाकार कीर्त्तित परमेश्वरि ।
एव करोति यो देवि सर्वसिद्धीश्वरो भवेत् ॥ ९ ॥

[1] C °नैव । [2] B °द्वितय । [3] B भवेत्° । [4] C °भोऽय । [5] D N °तु । [6] C °निरूपाय । [7] B D °पर । [8] D N नि शसस्तु ।

सप्तत्रिंशच्चत्वरान् हि क्रमात् क्रमगत चरेत् ।
सृष्टिसहारमार्गेण काळचक्र द्विधा भवेत् ॥ १० ॥
सृष्टिसहारमार्गेण मुख्यशाम्भव योगत ।
चतुर्विधो निगदित काळचक्र समाचरेत् ॥ ११ ॥
तत्रोपरि महेशानि श्रीविद्याचक्रमुत्तमम् ।
पराचक्र ततो देवि तत पट्शाम्भवाभिधम् ॥ १२ ॥
चतुर्विध यदुदित सवर्तेशक्रमे शृणु ।
चत्वर पुरयाकार कलावाहुमित शिवे[1] ॥ १३ ॥
उत्तरोत्तरतोचत्व[2] किं वा पुरपसहति ।
पट्पञ्चाशद्वेदादौ नवकुण्डक्रमेण च ॥ १४ ॥
द्वितीये तु द्विपञ्चाशत् द्विपष्टिस्तु तृतीयके ।
पञ्चाशद्वेदप्रमिता चतुर्थे परमेश्वरि ॥ १५ ॥
द्विसप्तति पञ्चमे तु चतु पष्टिस्तु पट्क्रमे ।
शिरोबिन्दुर्महेशानि सवर्त्तेश प्रपूजयेत् ॥ १६ ॥
अथनान्यप्रकारेण क्रममन्य शृणु प्रिये ।
सूर्य्यसख्याचत्वराणि कृत्वा यत्नेन पार्वति ॥ १७ ॥
तत्र कुण्डानि देवेशि रचयेत् क्रमत शिवे ।
आदौ बिन्दुर्महेशानि द्वितीये वह्निकुण्डकम् ॥ १८ ॥
ततीयचत्वरे देवि रससख्यानि कारयेत् ।
चतुर्थे वसुसख्यानि कलासख्यानि पञ्चमे ॥ १९ ॥
षष्ठे द्वाविंशति शिवे त्रिंशत् कुण्डानि सप्तमे ।
चतुस्त्रिंशति देवेशि वसुसख्याभिधे भवेत् ॥ २० ॥
अष्टत्रिंशद्भ्रसख्ये द्विचत्वारिंशच दिक्क्रमे ।
चत्वारिंशत्तथाष्टौ च रुद्रसख्याभिधे भवेत् ॥ २१ ॥

[1] N ॰साधन॰ । [2] D भवम् । [3] C चैत्य ।

द्वादशे पञ्चपञ्चाशत् कामसङ्ख्याभिध शृणु ।
पञ्चाशद्वसु[1]सङ्ख्यानि यथायोगेन कारयेत् ॥ २२ ॥
शाम्भवाख्यो महामेरुर्महासाम्राज्यदायक ।
तस्य विज्ञानमात्रेण त्रैलोक्यविजयी भवेत् ॥ २३ ॥
इति सक्षेपत प्रोक्त रहस्यातिरहस्यकम् ।
गोपनीय गोपनीय गोपनीय स्वयोनिवत् ॥ २४ ॥
स ज्ञानी स च विज्ञानी सर्वदेव[2]रहस्यवित् ।
तारिण्यास्तु चतु षोढा काल्यास्तु पञ्चषोढिका ॥ २५ ॥
सुन्दर्या पञ्चषोढा च विन्यस्तव्या प्रयत्नत ।
शक्तिन्यासे भवेदेकश्चक्रन्यासेषु भिन्नता ॥ २६ ॥
सर्वमेक महेशानि शक्तिसङ्गमतन्त्रके ।
पूर्णाभिषेकमारभ्य दिव्यसाम्राज्यत शिवे ॥ २७ ॥
योगोऽय[3] गदितो देवि रहस्यातिरहस्यकृत् ।
अहो धन्यतरा धन्यो दिव्यसाम्राज्यविन्न[4] ॥ २८ ॥
पूर्णाभिषेकसयुक्तो न प्रणाम[5] समाचरेत् ।
सर्वदा ध्यानसम्पन्न सदा पूजनतत्पर ॥ २९ ॥
तत्त्वचिन्तापरो भूत्वा देवरूपो[6] नरो भवेत् ।
आस्तिक्य मनस स्थैर्य्य दातृत्व च दयालुता ॥ ३० ॥
गुरुभक्तिर्देवभक्तिर्भक्तभक्तिपरो भवेत् ।
परापवाद तद्द्रोह परनिन्दा विवर्जयेत् ॥ ३१ ॥
स्त्रीषु निन्दा प्रहार च सर्वथा परिवर्जयेत् ।
परद्रव्य परस्त्रीं च परान्न सर्वथा त्यजेत् ॥ ३२ ॥
परशक्ति वर्जयेच्च परहस्त विवर्जयेत् ।

[1] D °ण° ।      [2] B वेद° ।      [3] C °गाङ्ग ।      [4] D °न्दव ।
[5] D °माण ।      [6] B D °पूज्यो ।

एकान्ते निवसेन्नित्य पर्वते च विशेषत ॥ ३३ ॥
योषिद्रूप[1] स्मरेत् सर्वं जगदेतच्चराचरम् ।
सदानन्दपरो भूत्वा देव्यानन्दपरायण ॥ ३४ ॥
सिन्दूरतिलकी स्वच्छ[2] स्वेच्छाचारी जितेन्द्रिय ।
क्रोध लोभ मद दम्भ मात्सर्यं चञ्चलत्वताम् ॥ ३५ ॥
वार्त्तालाप वर्जयेच्च बहु[3]वार्ता विशेषत ।
आसनस्य जय देवि तथा निद्राजय शिवे[4] ॥ ३६ ॥
इन्द्रियाणा जय देवि सर्वथा कारयेद्बुध ।
आहारस्य जय देवि खेचरीमुद्रिका भजेत्[5] ॥ ३७ ॥
यत्र कुत्र वसेन्नित्य यत्र कुत्र स्मरेच्छिवाम् ।
पूजयेद्विपिने घोरे कामिनीमण्डले शिवे ॥ ३८ ॥
वेश्यामण्डलगो भूत्वा सर्वदा चिन्तयेच्छिवाम् ।
मितवाक्यो[6] मिताहारो मितप्राशी महोत्तम ॥ ३९ ॥
तेजोरूप तु समाव्य[7] जगदेतच्चराचरम् ।
विभाव्य प्रजपेन्नित्य माया[8] यत्नेन सन्त्यजेत् ॥ ४० ॥
कोऽह कस्य किमात्मत्व[9] किंरूपोऽह कथ स्थिति ।
कुत्रोत्पन्न कथ जात किंरूप किं ममास्ति च ॥ ४१ ॥
किमाज्ञतामिति ध्यात्वा सर्वं तु तृणवत्त्यजेत् ।
अह तारा भवाम्यद्य तारारूपोऽहमेव सा[10] ॥ ४२ ॥
त[11]त्कृत कारित यद्यत्सूचित स्मारित च यत् ।
प्रेरित दर्शित यद्यद्यापित दीयते च यत् ॥ ४३ ॥
तया तत् क्रियते सर्वं नान्य कर्त्तास्ति भूतले ।

[1] C °द्रूप। [2] C °क शंख। [3] D द्वद्व°। [4] B स्मृत। [5] C D N जयेत्। [6] B C D °क च। [7] N °स्थाप्य। [8] C मयो। [9] D किं ममत्व। [10] N स। [11] B य°।

पूर्णाभिषेकसंयुक्तो यस्मिन्देशे विराजते ॥ ४४ ॥
स देशो धन्यतां याति समन्ताल्लक्षयोजनम् ।
पूर्णाभिषेकहीनानां दीक्षा नहि फलप्रदा ॥ ४५ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
शीतोष्णसमतां कृत्वा सदा तद्गतमानसः ॥ ४६ ॥
देवतायां लयं कृत्वा देवरूपो नरो भवेत् ।
पूर्णाभिषेकहीनानां दीक्षा पूजा च निष्फला ॥ ४७ ॥
आशीर्ग्राह्या महेशानि पूर्णदीक्षायुतस्य च ।
तन्त्रविद्भिश्च संग्राह्या तत्तोयं च समाचरेत् ॥ ४८ ॥
तस्य तोषणमात्रेण सन्तुष्टा सर्वदेवता ।
सर्वमन्त्राधिकारो हि तस्य हस्ते व्यवस्थितः ॥ ४९ ॥
महाविद्यास्वरूपो हि स एव परिकीर्त्तितः ।
नीला[1] वक्त्रे[2] वसेत्तस्य काली हस्तगता भवेत् ॥ ५० ॥
सुन्दरी गेहगा तस्य कमला नेत्रगोचरा ।
बगला तस्य क्रोधे तु बालाम्बा[3] हृदये स्थिता ॥ ५१ ॥
एवमन्या महाविद्या सिद्धविद्याश्च पार्वति ।
सर्वास्तद्धस्त[4]गा देवि नात्र कार्य्या विचारणा ॥ ५२ ॥
पूर्णाभिषेकयुक्तस्य न कोपं कारयेत् शिवे ।
तस्य कोपेन देवेशि जगदेतद्विनश्यति ॥ ५३ ॥
तस्य तोषणमात्रेण त्रैलोक्य[5] रक्षित[6] भवेत् ।
पञ्चवर्षभवो बालः पूर्णदीक्षासमन्वितः ॥ ५४ ॥
सर्वश्रेष्ठो महेशानि न ज्येष्ठो वयसाऽधिकः ।
अपि चण्डालजातिस्तु पूर्णदीक्षासमन्वितः ॥ ५५ ॥

[1] B निला, D नीला । [2] B C D चक्रे । [3] D च । [4] C °द्वार° ।
[5] B D °क्य° । [6] B D °रक्षण ।

ब्राह्मणादपि स ज्येष्ठो दीक्षामार्गोख्य[1]कर्मणि ।
न वयस्त्वे न जातित्वे न विद्यात्वे महेश्वरि ॥ ५६ ॥
पण्डितत्वे न देवेशि राज्यत्वे नापि पार्वति ।
तस्यापमानो देवेशि न कर्त्तव्यः कदाचन ॥ ५७ ॥
प्रमादात्कुरुते यस्तु तस्य पातो भविष्यति ।
अज्ञानात् मोहतो दम्भात् गर्वा[2]दपि महेश्वरि ॥ ५८ ॥
सदा तं पूजयेद्यत्नान्यथा तारिणीवचः ।
तस्य नाश करिष्यामि ताराहं भैरवेण च[3] ॥ ५९ ॥
पूर्णाभिषेकयुक्तस्य स्थापन[4] देवबच्चरेत् ।
यथा देवालये देव सदा वसति[5] पार्वति ॥ ६० ॥
तथा पूर्णायुते देवि विद्या तिष्ठति सर्वदा ।
गोपनीय गोपनीय गोपनीय स्वयोनिवत् ॥ ६१ ॥
इति सक्षेपत प्रोक्त किमन्यत् श्रोतुमिच्छसि ।

इति श्रीशक्तिसङ्गममहातंत्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे पट्शाम्भवमेरुविधौ सिद्धमतरहस्यं नाम एकादशः पटल ॥ ११ ॥

[1] D °र्गस्य । [2] C धर्मा° । [3] B °वी च वा । [4] C °स्थाप्यायनं । [5] B तिष्ठति ।

## द्वादशः पटलः ।

### श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
पूर्वं संसूचितं यन्मे तन्मे कथय शङ्कर ॥ १ ॥

### श्रीशिव उवाच ।

रहस्यातिरहस्यं च तारायोगरहस्यकम् ।
कथ्यते देवदेवेशि शृणु सावहिता भव ॥ २ ॥
तारायोगो योग एव तथा ताराजपो जपः ।
तारामंत्रो महामन्त्र सर्वमन्त्रोत्तमोत्तमः ॥ ३ ॥
स धन्य स च विज्ञानी स व्रती स[1] च दीक्षितः ।
स चात्मा स महादेव सर्वदेवाधिकः प्रभुः ॥ ४ ॥
परमात्मा स एवात्र सर्वदेवनमस्कृतः ।
स दर्शनी[2] स[3] विज्ञानी ब्रह्मानन्दपरायणः ॥ ५ ॥
तस्यैव जननी धन्या पिता तस्य सुरोपमः ।
ताराजापी पूर्ण[4]दीक्षासंयुक्तस्तारिणी स्वयम् ॥ ६ ॥
सर्वेश्वर[5] सर्वगश्च सर्वमन्त्रपरायणः ।
सर्वतन्त्रार्थवेत्ता च सर्वतं[6]त्रपरायणः ॥ ७ ॥
पञ्चपारायणासक्तः पञ्चरत्नप्रकाशकः ।
य कश्चिन्मन्त्रमालोक्य जपेद्दीक्षायुतो यदि ॥ ८ ॥
ततः सिद्धिर्विजानीयात् नात्र कार्य्या विचारणा ।
पुस्तके लिखिता मन्त्रा जपे जापे न सिद्धिदाः ॥ ९ ॥

[1] D शब्दार्थवित्॰ । [2] D सर्वदर्शी । [3] B नित्य॰ । [4] B सदा ।
[5] C ॰केशव । [6] C ॰म॰, D ॰य॰ ।

तस्य दर्शनमात्रेण मन्त्रक्षोभविनाशनम् ।
मूको जडोऽपि देवेशि पूर्णदीक्षायुतस्य च ॥ १० ॥
जल वस्त्र स्पृशेद्यो हि महाकविवरो भवेत् ।
सिद्धमन्त्र पुरस्कृत्य तारा[1]राया परमेश्वरि ॥ ११ ॥
घटे हस्त यदा दद्यात् तदा घटसरस्वती ।
सर्वं वदति देवेशि प्रहरद्वयमेव च ॥ १२ ॥
एतद्योगफल प्रोक्त तव प्रीत्या महेश्वरि ।
इतोऽपि वाच्य किं देवि किमन्यत् श्रोतुमिच्छसि ॥ १३ ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि पूर्वोक्त यद्रहस्यकम् ।

श्रीशिव उवाच ।

रहस्यातिरहस्य च तव प्रीत्या निगद्यते ॥ १४ ॥
महापदि महाघोरे प्राप्ते प्राणस्य सङ्कटे ।
राज्यहानौ द्रव्यनाशे सुतनाशे समागते ॥ १५ ॥
महामारीभये प्राप्ते राष्ट्रभङ्गे महेश्वरि ।
राज्यरक्षणयोग च परराष्ट्रविनाशकम् ॥ १६ ॥
महाप्रीतिकर योग षट्कर्मसाधन परम् ।
तत् कथ्यते महेशानि शृणु सावहिता भव ॥ १७ ॥
आदौ पञ्चाक्षरीं तारा कुल्लुकासहिता जपेत् ।
अधिष्ठात्री चण्डघण्टा कूर्चबीजाह्वया परा ॥ १८ ॥
काल्या शक्ति सैव शिवे ताराबीज तदेव तु ।
तारा प्रणवनामाख्या तदेव परिकीर्त्तितम् ॥ १९ ॥
छिन्ना चैकाक्षरीमन्त्र स एव परिकीर्त्तित ।

[1] C प° ।

एकस्मिन् त्रितये देवि महाक्रोधाभिध तत ॥ २० ॥
चतुर्विधारूपधर कूर्चबीजाह्वय शिव ।
चण्डघण्टेति विख्याता कूर्चबीजाह्वया भवेत् ॥ २१ ॥
केवल यस्य जापेन त्रिशक्तिजपभाग्भवेत् ।
कूर्चबीज पर शक्तिरस्य कालकमुच्यते ॥ २२ ॥
यथा प्रीत्या महेशानि त्रिशक्तिर्देवता मता ।
कालीबीज तथा तारा छिन्ना चैकाक्षरी तथा ॥ २३ ॥
त्र्यक्षरी परमा विद्या त्रैलोक्यविजयाभिधा ।
तारा काली तथा छिन्ना तारा छिन्ना च कालिका ॥ २४ ॥
काली छिन्ना तथा तारा छिन्ना काली च तारिणी ।
छिन्ना तारा कालिका च पट्भेदा[1] विजया स्मृता ॥ २५ ॥
मन्त्रश्रवणसन्तुष्टा त्रैलोक्यराज्यदायिनी ।
देवता तारिणी पूर्वा प्रतिदेवी तु[2] घण्टिका ॥ २६ ॥
अधिदेवी[3] तु विजया त्र्यक्षरी परमा[4] कला ।
यद्बीजमादौ देवेशि तद्देवायुधभूषणे[5] ॥ २७ ॥
मध्यबीज स्वरूप स्यादन्त्यबीज च वाहनम् ।
नवाक्षरी परा विद्या वेदार्णा वा महेश्वरि ॥ २८ ॥
त्रिंशदर्णा महातारा त्रिशक्तेर्मुख[6]मीरितम् ।
त्रैलोक्यविजया विद्या स्मृतमात्रवरप्रदा ॥ २९ ॥
त्रैलोक्यविजयाख्यान्य तदेव परिकीर्त्तितम् ।
यद्बीजमादौ देवशि तदेव यन्त्रमीरितम् ॥ ३० ॥
अथवा यत्र भक्ति स्यात्तत्पीठ पूजन शिवे ।
एतत्प्रयाग देवेशि छिन्नायाण प्रकीर्त्तित ॥ ३१ ॥

[1] C तथैव । [2] D त्रि° । [3] D ° वार्ग । [4] B विजया । [5] N ° णा । [6] C त्रि° । [7] C °नि° ।

सहाराख्र महेशानि बाणाग्र परिकीर्त्तिनम् ।
सैव चार्द्रपटी[1] विद्या शुष्क[2]वस्त्रा तु जीरहा ॥ ३२ ॥
शुभाशुभप्रवक्ता तु श्रीवार्त्ताकथनी भवेत् ।
त्रैलोक्यवार्त्ताकथनी महापद्मावती कला ॥ ३३ ॥
ऊनत्रिंशाक्षरी विद्या त्रैलोक्य[3]ज्ञानगोचरा ।
किञ्चिज्जपेन्मूलविद्या तदान्या प्रजपेत् शिवे ॥ ३४ ॥
सर्वासा तु महेशानि जपपूजादिक[4] बलिम् ।
अनुलेपनगन्ध च दद्याद्यत्नेन पार्वति ॥ ३५ ॥
त्रिमासाभ्यासयोगेन उदयास्तमित जपेत् ।
चलस्थिरासनत्वेन यज्ञान तन्निवेदयेत् ॥ ३६ ॥
एतत्प्रयोगयोगेन किं तद्यन्न करे स्थितम् ।
साम्राज्यमुद्रिकायोगात् किन्न सिध्यति भूतले ॥ ३७ ॥
काली तारामयी प्रोक्ता वटुकस्य स्वरूपिणी ।
प्रणव च तथा माया[5] सम्बद्धदानयुग्मकम् ॥ ३८ ॥
कुरुयुग्म बीजयुग्म स्वाहान्ता चैकविंशति ।
एतस्य धारिणी देवी पताकास्थान[6]गोचरा ॥ ३९ ॥
पताकाया लिखेदत्र वटुक[7] मध्यकोष्ठके[8] ।
वटुक बालवेश च नागयज्ञोपवीतिनम् ॥ ४० ॥
कपालशूलभूषाढ्य स्वयूथ[9] परिवेष्टितम् ।
कुङ्कुमैर्नववर्णैश्च वेष्टित ब्रह्मरूपिणम् ॥ ४१ ॥
द्वादशारस्थित देव प्रत्यक्षफलद कलौ ।
प्रेतासनसमासीन त्रैलोक्यजयद विभुम् ॥ ४२ ॥
एतत्पताका सन्धार्य्य त्रैलोक्यविजयी भवेन् ।

१ [1] B C D °न्द्र°। [2] C °टा°। [3] C युद्°, D शुक्र°। [4] N °काल्य°।
[5] B सहा°। [6] C °ता°। [7] C सलर नाय°। [8] N चतुष्क। [9] N °क।

[1]महाराज्यपद जित्वा त्रैलोक्यविजयी भवेत् ॥ ४३ ॥
पश्चाद्ब्राह्मण्यपुरश्चर्य्याक्रमेण तु विशेषत ।
कृष्णसार च हरिण जा[2]तिमात्र परित्यजेत् ॥ ४४ ॥
कुञ्जर च हय नार प्रीत्यर्थं तारिणीमनो ।
बलिदान प्रकुर्वीत यदेव पच्यते शिवे ॥ ४५ ॥
महिषत्वेन कुष्माण्ड छागत्वेन तु कर्कटी ।
बीजपूर नरत्वेन रम्भापुष्प हय स्मृत ॥ ४६ ॥
गूळक मत्स्यभेदेन यथायोगेन कारयेत् ।
सात्त्विक राजस देवि तामस तु तृतीयकम् ॥ ४७ ॥
त्रिविध बलि[3]दान तु कीर्त्तित परमेश्वरि ।

श्रीदेव्युवाच ।

वटुके को विशेषोऽस्ति का शक्ति किंस्वरूपधृक् ॥ ४८ ॥
शिवशक्त्यात्मको वापि ब्रह्मविष्णुनामकोऽपि वा ।
भर्त्ता पुत्रोऽथवा भ्राता का क्रिया तद्वद प्रभो ॥ ४९ ॥
अत्र मे सशयो जात सशय मेऽत्र नाशय ।

श्रीशिव उवाच ।

रहस्यातिरहस्य च रहस्यातिरहस्यकम् ॥ ५० ॥
कथ तत् कथ्यते देवि शपथ कुरु पार्वति ।

श्रीदेव्युवाच ।

शपे त्वच्चरणाभ्या तु हिमाद्रिशिरसा शपे ॥ ५१ ॥
स एव विमुखो भूयात् किमन्यैर्बहुजल्पितैः ।

[1] C omits this line [2] C या[*]। [3] B वस्तु[*]।

श्रीशिव उवाच ।

शापेन प्रद्वेष्टोऽस्मि तत्कथा कथ्यते शृणु ॥ ५२ ॥
वेताला प्रेतकुष्माण्डा यक्षराक्षसकिन्नरा ।
ब्रह्मा विष्णुस्तथा रुद्रो ग्रहाश्चान्ये महेश्वरि ॥ ५३ ॥
सञ्जाता परमेशानि तैर्ग्रस्त तु चराचरम् ।
केचिद्विरिञ्चिं सेवन्ते शिवं विष्णुं तथापरे ॥ ५४ ॥
महाविद्या भजन्त्यन्ये न ते वै सिद्धिभागिन ।
वेतालाद्या महादेवि जपपूजादिहारका ॥ ५५ ॥
तेषा विनाशनार्थाय भक्तानुग्रहणाय च ।
वटुकोऽय महेशानि ताराकाल्या विभावित ॥ ५६ ॥
पञ्चाशद्वै महापद्म महामन्त्रा महेश्वरि ।
पञ्चाशत्कोटिगणना योगिनीना तु कोटिश ॥ ५७ ॥
भैरवाणा कोटिकोटिर्महाविद्यास्त्वनेकश ।
त्रिखर्व[1]सख्या तारा स्यात् काली दशार्बुदा शिवे ॥ ५८ ॥
कलाकोटिप्रभेदा तु सुन्दरी तेन[2] सयुता ।
बाला त्रिकोटिसख्याभिर्दिव्ना षोडशखर्व[3]त ॥ ५९ ॥
षट्त्रिंशल्लक्षब्रह्माख्यैश्चन्द्रषोडशमायुता ।
कोटिद्वादशभिर्देवि भुवनाशेन पार्वती ॥ ६० ॥
धूम्रकला लक्षभेदं सिद्धविद्याख्यतत्त्वत ।
चतुरशीतिलक्षैश्च मातङ्गीमन्त्र[4]त शिवे ॥ ६१ ॥
एतत् सर्वमय तेज सर्वब्रह्माण्डरूपधृक् ।
सर्वतेज समुद्भूत बहुरूप सनातनम् ॥ ६२ ॥
सत्त्वरजस्तमोयुतै ब्रह्मविष्णुमहेश्वरै ।
तच्छक्तिभिर्महेशानि रूपत्रयधर परम् ॥ ६३ ॥

[1] C त्रिशत् । [2] D भेद, B रान । [3] C वर्ष । [4] C मन्त्र ।

तत्रापि दशधा भिन्नं बटुरूपं सनातनम् ।
महोग्रतारया दत्तमुपवीतं महेश्वरि ॥ ६४ ॥
कपालं छिन्नया दत्तं काल्या कालो निवेदितः ।
दत्तं त्रिशूलं कालेन यन्मूले तु त्रिशक्तयः ॥ ६५ ॥
काली तारा तथा छिन्ना शूलरूपेण सन्ति च ।
अन्ये देवाः सिद्धयश्च यक्षगन्धर्वकिन्नराः ॥ ६६ ॥
रूपं कौकुरमासाद्य संभजन्ति निरन्तरम् ।
एवं बटुकरूपं तु संजातं परमेश्वरि ॥ ६७ ॥
यदारभ्य धृतं रूपं बटुकाख्यं शिवेन तु ।
तदा प्रभृति देवेशि वेतालाद्या न दुःखदाः ॥ ६८ ॥
सिद्धिं संलेभिरे स्वां स्वां देवतादर्शनोत्सुकाः ।
एवं तु बटुकं पूज्य वास्तुपूजार्थमेव वा ॥ ६९ ॥
ये पूजयन्ति देवेशि ते नराः शिवरूपिणः ।
सर्वसिद्धीश्वरा देवि साधकाः सम्भवन्ति च ॥ ७० ॥
वेतालादेः किंकरत्वं यक्षिणीपादुकागणः ।
खड्गाञ्जनविलासाद्याः परकायप्रवेशनम् ॥ ७१ ॥
तदारभ्य महेशानि साधकस्य करे स्थितम् ।
सर्वं तु शाबराद्यन्तु यत्स्मृत्वा करगं भवेत् ॥ ७२ ॥
एवं तु बटुको जातः सर्वसिद्धिप्रदः[2] शुभः ।
दशविद्या योगरूपं समासाद्य वसन्ति च ॥ ७३ ॥
ज्येष्ठी या दशमी शुद्धा दशयोगसमन्विता ।
बटुकस्य तिथिः प्रोक्ता बटुकोत्पत्तिकारिणी ॥ ७४ ॥
देव्याः पुत्रवतां यातो बटुकः परमेश्वरि ।
[3]त्वां विहाय च ये मां च सम्भवन्ति युगे युगे ॥ ७५ ॥

[1] °च्छू° । [2] B° मय. । [3] C omits four lines.

तेषां न सिद्धिर्देवेशि कोटयर्बुदयुगैरपि ।
खड्गशूलधर काल्या ताराया पूर्वमीरितम् ।। ७६ ।।
द्विचतुर्वसुहस्ताढ्य बटुकं परमेश्वरि ।
रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ।। ७७ ।।
सर्वसिद्धिप्रदो देवि सर्वसाम्राज्यदायक ।
सर्वापत्तारणो योगी स्वसैन्यरक्षक पर ।। ७८ ।।
परसैन्यस्य राष्ट्रस्य निद्रानी नाशक पर ।
परराज्ये महेशानि नानोपद्रवकारक ।। ७९ ।।
अहोरात्रेण देवेशि वीरसाधनयोगत ।
बटुकस्तु प्रसन्न स्यात्तारा काली तथा शिवे ।। ८० ।।
अन्यप्रयोगा देवेशि क्वचित्सिध्यन्ति वा न वा[1] ।
गोपनीय गोपनीयं गोपनीयं स्वयोनिवत् ।
इति संक्षेपत प्रोक्तं किमन्यत् श्रोतुमिच्छसि ।। ८१ ।।

इति श्रीशक्तिसङ्गमतन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे तारासूक्ते सिद्धप्रयोगो नाम द्वादश पटल ।। १२ ।।

[1] C मानवा , N दानवा ।

## त्रयोदशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि वीररात्र्यादिनिर्णयम् ।

श्रीशिव उवाच ।

वीररात्रिर्महारात्रिः कालरात्रिस्तथैव च ॥ १ ॥
मोहरात्रिर्घोररात्रिः क्रोधरात्रिस्तथैव च ।
तथैव चावलारात्रिस्ताररात्रिस्तथैव च ॥ २ ॥
शिवरात्रिर्दिव्यरात्रिर्दारुणा च यथाक्रमात् ।
कथ्यते परमेशानि शृणु सावहिता भव ॥ ३ ॥
चतुर्दशीसंक्रमश्च कुलर्क्षकुलवासरः ।
अर्धरात्रौ यथा योगो वीररात्रिः प्रकीर्त्तिता ॥ ४ ॥
शुक्लाष्टमी चाश्विनस्य नवरात्रं तु तस्य वै ।
महारात्रिर्महेशानि कालरात्रिं शृणु प्रिये ॥ ५ ॥
दीपोत्सवं चतुर्दश्यां त्वमाया योग एव च ।
कालरात्रिर्महेशानि ताराकालीप्रियंकरी ॥ ६ ॥
जन्माष्टमी महेशानि मोहरात्रिः प्रकीर्त्तिता ।
कृष्णावतारपर्य्यन्तं तारायाः शाप ईरितः ॥ ७ ॥
जाते कृष्णावतारे तु निर्मुक्ता तारिणी परा ।
उत्पत्तौ विन्ध्यवासिन्या विद्युद्रूपे समागते ॥ ८ ॥
श्रीमहातारिणी विद्या महारण्यपरायणा ।
स्मरणादेव संसिद्धा स्मृति[1]पुष्टिकरी परा ॥ ९ ॥
चैत्रे मासि नवम्यां च शुक्लपक्षे च भृगुते[2] ।

[1] C मति[1] । [2] D भृगुते ।

क्रोधरात्रिर्महेशानि तारारूपा भविष्यति ॥ १० ॥
मासे मार्गशिरे[1] प्राप्ते कृष्णाष्टम्या महेश्वरि ।
महाकालस्वरूपा च घोररात्रि प्रकीर्त्तिता ॥ ११ ॥
प्राप्ते फाल्गुनके मासि कृष्णैकादशिका तु या[2] ।
[3]भृगुभौमयुता चेत् स्याद्वज्ररात्रिरीरिता ॥ १२ ॥
ज्येष्ठी या दशमी शुद्धा[4] भृगुवासर[5]संयुता ।
दशयोगसमायुक्ता रात्रावे[6]कादशी यदि ॥ १३ ॥
सा तिथिर्दिव्यरात्रिश्च कीर्त्तिता परमेश्वरि ।
ज्येष्ठी या दशमी शुद्धा दशयोगसमन्विता ॥ १४ ॥
बटुकस्य तिथि प्रोक्ता बटुकोत्पत्तिकारिणी ।
अमाभौमसमायुक्ता सक्रमेण समन्विता ॥ १५ ॥
कुलर्क्ष[7]क्षसमायुक्ता ग्रहण यदि चेद्भवेत् ।
ताराराविस्तु सप्रोक्ता माम्यादेव तु लभ्यते ॥ १६ ॥
फाल्गुने कृष्णपक्षे तु ह्यर्धरात्रौ भृगौ शिवे ।
शिवरात्रिस्तु सजाता सर्वसिद्धिप्रदायिनी ॥ १७ ॥
अमाभृगुसमायुक्ता सूर्य्यग्रहणयुक् यदि ।
अपराह्णे यदा योगो मृतसंजीवनी तिथि ॥ १८ ॥
स्नान[8]दानादिहोमान्तमनन्तफलद भवेत् ।
अष्टमी चैत्रमासी या सक्रमेण समन्विता ॥ १९ ॥
सिद्धिरात्रिरिति ख्याता ताराकालीसमाकुला ।
तृतीया माघने शुद्धा कुलवारर्क्षसंयुता ॥ २० ॥
दारुणा कीर्त्तिता देवि सर्वसिद्धीश्वरी परा ।

[1] C °र । [2] After this C adds या तिथिर्दिव्यरात्राणि भृगुभौमयुत चरेत् ।
[3] This line is omitted in C. [4] D °क्ला । [5] B D °रेण ।
[6] C तारा चै° । [7] C °ॠ° । [8] D जल° ।

क्रमेण कथितं सर्वं पर्वराजाभिधं शृणु ॥ २१ ॥
तृतीया पौषमासीया भृगुवासरसंयुता ।
साऽपि चेन्मकराक्रान्ता कुलनक्षत्रसंयुता ॥ २२ ॥
चतुर्थीसहिता चेत्स्यात् रेवतीसहिता क्वचित् ।
पर्वराजाभिधं पर्वं सर्वपर्वोत्तमोत्तमम् ॥ २३ ॥
तृतीया चैत्रमासीया रेवतीसंयुता यदि ।
ऋद्धियोगो महेशानि होमकर्मणि शस्यते ॥ २४ ॥
प्रतिमासे पौर्णमासी मासनक्षत्रसंयुता ।
कुलवारसमायुक्ता सा तिथिः सुन्दरी भवेत् ॥ २५ ॥
अष्टमी प्रतिमासस्य कृष्णपक्ष[1]स्य पार्वति ।
भौमयुक्ता तथा ऋक्षयुक्ता वा केवला च वा ॥ २६ ॥
देवीरात्रिरिति ख्याता सर्वसिद्धिप्रदायिनी ।
चतुर्थी माघमासस्य मकराक्ता भवेद्यदि ॥ २७ ॥
गणपस्य तु सा[2] रात्रिरिति ख्यातेति औ[3]डवः ।
नवमी कृष्णपक्षस्य कुलऋक्षसमन्विता ॥ २८ ॥
वारयुक्तायथा देवि सिद्धिरात्रिः प्रकीर्तिता ।
चतुर्थी कृष्णपक्षस्य कुलवारर्क्षसंयुता ॥ २९ ॥
केवलं भौमयुक्ता वा बाल[4]रात्रिः ससंक्रमे ।
अमाभौमसमायुक्ता कुलर्क्षसंयुता यदि ॥ ३० ॥
कृष्णरात्रिरिति ख्याता अक्षोभ्यप्रीतिकारिणी ।
अमार्कश्रवणे जा[5]ते युक्तश्चेत् पौषमाघयोः ॥ ३१ ॥
अर्द्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः ।
धर्मरात्रिर्महेशानि कीर्तितेयं सुरर्षिभिः ॥ ३२ ॥
अमाभौमेन सोमेन योगेन भृगुणाथवा ।

[1] B °मास°। [2] B तथा। [3] B C भी°। [4] B C °ण°। [5] B C पा°।

गुरुणा रविणा देवि कुलऋक्षसमन्विता ॥ ३३ ॥
दिव्यमाण्डलिको योग. सूर्य्यपर्वशताधिक ।
माघमासे शुक्लपक्षे सप्तमी या प्रकीर्त्तिता ॥ ३४ ॥
सौरी तिथिस्तु सा ज्ञेया जपहोमादिक चरेत् ।
रवियुक्ता कुलर्क्षैस्तु वासरेणापि सयुता ॥ ३५ ॥
महासौरीति विज्ञाता त्रैलोक्योत्पत्तिकारिका ।
सप्तमी प्रतिमासस्य रवियुक्ता यदा भवेत् ॥ ३६ ॥
हसी तिथिस्तु विज्ञेया मोक्षधर्म्मपरायणा ।
बुधाष्टमी महेशानि[1] प्रतिमासस्य या भवेत् ॥ ३७ ॥
विष्णुरात्रिरिति ख्याता भाद्रे मासि विशेषत ।
माघे मासि शुक्लपक्षे पञ्चम्या भृगुवासरे ॥ ३८ ॥
वसन्तपञ्चमी प्रोक्ता कामसञ्जीवनी तिथि ।
आरात्रि[2]क जपो होम कीर्त्तन कामनर्त्तनम् ॥ ३९ ॥
श्रावणे पौर्णमास्या तु तदृक्षे परमेश्वरि ।
पवित्रारोपण कार्य्यं रक्षा दशविधा चरेत् ॥ ४० ॥
पौर्णिमा चैत्रमासीया तस्या मदन[3]पूजनम् ।
प्रतिविद्याविधौ देवि प्रोक्तयोगे प्रपूजनम् ॥ ४१ ॥
एतद्योगपूजनाद्धि सिद्धि विन्दन्ति किं पुन ।
इति सक्षेपत प्रोक्त किमन्यत् श्रोतुमिच्छसि ॥ ४२ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासवादे सिद्धितन्त्रे वीरराज्यादिनिर्णयो नाम त्रयोदश पटल ॥ १३ ॥

[1] N तृतीया च । [2] B ° त्रि ° । [3] C ज्ञातव्यामतु °, B भेदेन ।

## चतुर्दशः पटलः ।

श्रीदेव्युवाच ।

देवदेव महादेव सर्वेषां सुखवर्द्धन ।
केन सिद्धिं ददात्याशु तारा त्रैलोक्यतारिणी[1] ॥ १ ॥
श्रीमद्दक्षिणा काली सिद्धिं किं नः[2] प्रयच्छति ।
तन्मे वद महादेव यद्यहं तव वल्लभा ॥ २ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथं त्वयि निवेद्यते ।
शपथं कुरु देवेशि तर्हि तत्त्वं[3] वदाम्यहम् ॥ ३ ॥

श्रीदेव्युवाच ।

शपे त्वच्चरणाभ्यां च सैव मे विमुखी भवेत् ।

श्रीशिव उवाच ।

शपथेन प्रहृष्टोऽस्मि कथ्यते शृणु साम्प्रतम् ॥ ४ ॥
सिद्धिर्मधुमती नाम्ना प्रादुर्भूता तवा[4]ज्ञया ।
काली तारामयं[5] धाम त्वत्सकाशादभूच्छिवा ॥ ५ ॥
श्रीविद्यया मुखं दत्तं काल्या करयुगं शिवे ।
तारया चाङ्गुलिर्दत्ता भुवनेश्या हृदम्बुजम् ॥ ६ ॥
छिन्नया चरणद्वन्द्वं मातङ्ग्या नयनद्वयम् ।
लक्ष्म्या ललाटं दत्तं च तथैव सिद्धविद्यया ॥ ७ ॥

[1] B °रिता । [2] N काली । [3] N ला तु । [4] B दा । [5] D °रमकं ।

केशा दत्ता[1] महेशानि गुल्फौ ब्रह्मास्त्रविद्यया ।
हासस्तु वाल्यया दत्तो वाजी[2] दत्तो महेश्वरि ॥ ८ ॥
श्रिया च रुचक[3] देवि धूमावत्या तु निग्रहः ।
अन्यदेवास्तु केशान्ते ब्रह्माण्डं हृदयाम्बुजे ॥ ९ ॥
एवं सर्वांशतो जाता तेजोराशिसमुद्भवा ।
महामधुमती सिद्धिस्त्रैलोक्याकर्षणी परा ॥ १० ॥
पार्वत्यरुन्धती दुर्गा मृतसञ्जीवनी परा ।
सर्वमाकर्षयेत्तूर्णं त्रैलोक्याकर्षकारणात् ॥ ११ ॥
काली तारामथ धाममाविर्भूतमभूच्छिवा ।
महापायससन्तुष्टा पायसान्नपरायणा ॥ १२ ॥
महामधुमती विद्या त्रैलोक्याकर्षणी परा ।
भैरवाकर्षणी विद्या वेतालाकर्षणी तथा ॥ १३ ॥
किन्नराकर्षणी देवि देवा[4]कर्षणकारिणी ।
तस्या मन्त्रं प्रवक्ष्यामि त्रैलोक्याकर्षणं परम् ॥ १४ ॥
"प[5]"पञ्चमं पावकयुक् नादबिन्दुविभूषितम् ।
महाकामकला युक्ता प्रोक्ता त्वेकाक्षरी कला ॥ १५ ॥
मधुमतीं समुद्धृत्य ना[6]न्त कामसमन्वितम् ।
स्थानेरेति समुद्धृत्य जङ्गमाकर्षणीति च ॥ १६ ॥
"ठ"युग्मान्ता वह्निजाया चित्कलार्णा[7] प्रकीर्तिता[8] ।
अष्टादशाक्षरी विद्या त्रैलोक्याकर्षणी परा ॥ १७ ॥
कामदेवो ऋषिः प्रोक्तो निच्छायत्रिका तत ।
च्छन्दः प्रोक्त महेशानि देवता सैव कीर्तिता ॥ १८ ॥
"श्रीं"वीज च तथा[8] स्वाहा शक्तिः प्रोक्ता महेश्वरि ।

[1] C मया । [2] B राज्य । [3] D श्रियश्च रुचया । [4] C *वी* ।
[5] D मा* । [7] B *ल्याणी । [8] C मन ।

स्थावरजङ्गमाकर्षे विनियोगः प्रकीर्त्तितः ॥ १९ ॥
षड्दीर्घभाजा बीजेन कुर्यादङ्गानि षट्क्रमात् ।
ततो ध्यानं प्रकुर्वीत वक्ष्यमाणं महेश्वरि ॥ २० ॥
गौराङ्गीं शरदिन्दुसुन्दरमुखीं पीतांशुकां पीवरां
प्रोत्तुङ्गस्तनमण्डलप्रविलसज्जाम्बूनदैकावलीम् ।
श्वेतोत्तुङ्गतुरङ्गगां त्रिनयनां पीताङ्गरागस्रजां
ध्यायेत्पायसलालसां मधुमतीं दोर्भ्यां दधानां सृणिम् ॥ २१ ॥
दिग्बन्धभूतशुद्ध्यादीन् कालीवत् समुपाचरेत् ।
यं[1] त्रावरणकं नास्ति केवलं[2] पूजयेच्छिवे ॥ २२ ॥
सर्वं त्रिशक्तिवत्प्रोक्तं विशेषः कथ्यते शृणु ।
एवं ध्यात्वा जपेद्विद्यां सर्वाकर्षणकारिणीम् ॥ २३ ॥
पुरश्चरणसिद्ध्यर्थं सहस्राणां तु सप्ततिः ।
सिद्धमंत्रे सिद्धचर्या प्रोक्ता देवि मया तव ॥ २४ ॥
कदलीवनमासाद्य वर्षमात्रं महेश्वरि ।
सर्वकालं जपेन्मंत्रं पायसान्नपरायणः ॥ २५ ॥
वीरसाधनवद्देवि लक्षमात्रं जपेत्ततः ।
ततः सप्ततिसाहस्रं प्रत्यक्षार्थं महेश्वरि ॥ २६ ॥
पायसं कदलीपत्रे पायसं घृतशर्करम्[3] ।
भुक्त्वा मोचावने वीरजने कुर्यादतन्द्रितः ॥ २७ ॥
गन्धर्ववेशो गतभीर्निर्भागैः पायसं चरेत् ।
अंशद्वयं पुरा कृत्वा तत्क्रमं शृणु पार्वति ॥ २८ ॥
एकांशे चांश[4]युग्मञ्च एकांशं पूर्णमेव च ।
परस्यांशस्य पूर्वांशं स्वयं च भक्षयेच्छनैः ॥ २९ ॥

[1] C य[*] । [2] C[*] लं । [3] B N[*] सारवं (त्?) [4] B वीर[*] ।

एकस्मिन् कदलीपत्रे "म्रो" मित्युत्सर्गमालिखेत् ।
प्रथमसप्तके याति तूष्णीं नैत्र[1] यथा तथा ॥ ३० ॥
द्वितीयसप्तके देवि प्रतिमां काञ्चनीमिव ।
तृतीयसप्तके देवि प्रत्यक्षाश्नाति पायसम् ॥ ३१ ॥
वरं ददाति हठतः साधकस्य यथेप्सितम् ।
तिष्ठत्यहर्निशं सार्धं साधकस्य यथेप्सितम् ॥ ३२ ॥
आकर्षयत्यम्बुनिधेः सुमेरोश्च दिगन्ततः ।
पातालादिन्द्रलोकाच्च हैमशैलभूरुहात् ॥ ३३ ॥
अलभ्यानि च वस्तूनि दूराद्भूमितलादपि ।
नदीं[2] पुरीं च रत्नानि समाकर्षति तत्क्षणात् ॥ ३४ ॥
वृत्तान्तं च पुरस्थानां राज्ञां[3] च कथयत्यपि ।
रहस्यं विद्विषां[4] चापि सर्वं सत्वरमाविशेत् ॥ ३५ ॥
त्रैलोक्याकर्षणी विद्या न देया यस्य कस्यचित् ।
वटुकेमां गृहाण त्वं सिद्धिदो मेऽस्तु सर्वदा ।
इति संक्षेपतः प्रोक्तं मन्त्रभेदश्च साधनम्[5] ॥ ३६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
ताराकल्पाङ्गसिद्धिर्नाम चतुर्दशः पटलः ॥ १४ ॥

[1] D यत्रामेव । [2] CD °न्दीं । [3] D °ज्ञं । [4] D द्वि
[5] B किमन्यत् श्रोतुमिच्छसि ।

## पञ्चदशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि मन्त्रानन्यांश्च[1] साधनम् ।

श्रीशिव उवाच ।

एकाक्षरी चाद्यबीजा[2] ठयुग्मा त्र्यक्षरी भवेत् ॥ १ ॥
ठहीना स्वाहया युक्ता त्र्यक्षरी कामपूजिता ।
बीजसम्बोधनयुता पञ्चार्णा परिकीर्त्तिता ॥ २ ॥
बीजसम्बोधनयुता ठद्वयान्ता मुनिप्रिया ।
बीजसम्बोधनयुता स्वाहान्ता ऋषिपूजिता ॥ ३ ॥
सम्बोधनठयुग्मान्ता[3] षड्वर्णा सकलार्थदा ।
सम्बुद्धिः स्वाहया युक्ता सर्वाकर्षणकारिणी ॥ ४ ॥
बीजकर्मा[4]न्तगा विद्या दशार्णा विश्वरूपिणी[5] ।
कर्माद्या ठद्वयान्ता च रुद्रार्णा परमेश्वरि ॥ ५ ॥
कर्माद्या वह्निजायान्ता विद्या[6]द्या परिकीर्त्तिता ।
बीजकर्मठद्वयान्ता महाविद्या प्रकीर्त्तिता ॥ ६ ॥
बीजकर्म ततः स्वाहा सिद्धविद्या प्रकीर्त्तिता ।
बीजसम्बोधनपदं कर्मान्ता च परा कला ॥ ७ ॥
बीजसम्बोधनपदं कर्मठद्वयसंयुतम् ।
बीजसम्बोधनपदं कर्मस्वाहान्विता परा ॥ ८ ॥

[1] D यन्त्रकाल्याश्च । [2] D °विद्या । [3] D बीजसम्बोधनं स्वाहा । [4] D reads वर्म uniformly instead of कर्म which is the reading in all the other MSS. [5] N महाविद्या प्रकीर्त्तिता । [6] B कामा° ।

बीजसम्बोधनपदे ठयुक्स्वाहान्विता परा ।
बीजं ठयुक् ततः स्वाहा विद्यान्या परिकीर्त्तिता ॥ ९ ॥
सम्बोधनं[1] ठयुक् स्वाहा विद्या सर्वार्थदा परा ।
बीजकर्म ठयुक् स्वाहा[2] विद्या सर्वाङ्ग[3]सुन्दरी ॥ १० ॥
सम्बोधनं ततः कर्म ठद्वयान्ता परा भवेत् ।
सम्बोधनं ततः कर्म ठयुक्स्वाहान्विता परा ॥ ११ ॥
सम्बोधनं ततः कर्म स्वाहान्ता शिवसुन्दरी ।
चतुर्विंशतिभेदैस्तु गदिता परमा कला ॥ १२ ॥
बाला मधुमती भिन्ना तथैव सुन्दरीमनो. ।
निधिसिद्धौ भवेद्भिन्ना त्रिभेदा सा प्रकीर्त्तिता ॥ १३ ॥
एवं त्रिंशतिधा प्रोक्ता त्रैलोक्याकर्षणी परा ।
विजने कदलीपत्रवने गत्वा निशामुखे[4] ॥ १४ ॥
शुभलग्ने शुभदिने सङ्कल्पं[5] कामनान्वितम् ।
अष्टादशाक्षरस्यास्य महामधुमतीमनोः ॥ १५ ॥
मंत्रसिद्ध्यर्थमित्युक्त्वा चाद्यप्रभृति चोच्चरेत् ।
एकविंशति चोद्धृत्य दिवसान्तं समुच्चरेत् ॥ १६ ॥
जपरूपं ततः प्रोक्तैः पुरश्चरणमुच्चरेत् ।
षडङ्गयुग्मसाधेन कृत्वा ध्यात्वा प्रपूज्य च ॥ १७ ॥
गोदुग्धपायसं कृत्वा कदलीपत्रगोचरम् ।
बीजं मधुमतीयुक्त्वा चतुर्थ्यन्तं समुद्धरेत् ॥ १८ ॥
पायसं तत्र दत्वा च निवेद्य च पुनः पुनः ।
तस्यां संमुखवर्त्यां तु पुनराचमनीयकम् ॥ १९ ॥
दद्यात्ताम्बूलं सन्दर्श्य[6] प्रणम्य च पुनः पुनः ।

[1] बीजकर्म ।   [2] C °का स्यात् ।   [3] B °वैत्र° ।   [4] B °मुख ।
[5] N सङ्कल्पं ।   [6] D सुन्दर्यै ।

पायसार्द्धं पृथक् स्थाप्य शेषार्द्धं भक्षयेत् स्वयम् ॥ २० ॥
रक्तमाल्यादिभिर्देवि दिव्याम्बरविभूषितम् ।
गन्धर्ववेश कृत्वा च प्रत्यह निसहस्रकम् ॥ २१ ॥
निशत च चतुस्त्रिंशत् एकविंशधीरितम्रान् ।
प्रजपेत् परमेशानि देवता वशमस्ताविधौ॥ २२ ॥
वटुकस्य च सयोगात् सिद्धयस्यैव' न चान्यथा ।

श्रीतारोपासको यस्तु कालिकोपासकस्तु य ॥ २३ ॥
इमा विद्या साधयित्वा सिद्धिमाप्नोति नान्यथा ।
यान् यान् प्रार्थयते कामास्ताँस्तान् कामान् क्षणे क्षणे ॥ २४ ॥
ददाति सा परा विद्या सर्वाकर्षणकारिणी ।
लोहप्राकारसन्नद्धदुर्गादेवालयाच्छिवे ॥ २५ ॥
धनद शङ्कर विष्णु पार्वतीं चाप्यरुन्धतीम् ।
एव दशमहाविद्या समाकर्षति तत्क्षणात् ॥ २६ ॥
लङ्कां समुद्रान् द्वीपांश्च सिद्धयक्षमहोरगान् ।
अश्रुतान्यपि वस्तूनि समाकर्षति तत्क्षणात् ॥ २७ ॥
किन्नरान् यातुधानादीन् निधीन् सिद्धौ क्षणेन च ।
सुमेरु चैव कैलास क्षणादाकर्षयेच्छिवे ॥ २८ ॥
तत्तद्देशस्थित देवि त्रैकाल्यज्ञानमेव च ।
सर्वं वदति देवेशि सावधान करोति य ॥ २९ ॥
त्रैलोक्याकर्षणी विद्या न देया यस्य कस्यचित् ।
आदौ विद्या च ससाध्य तत सिद्धिं प्रसाधयेत् ॥ ३० ॥
गोपनीय गोपनीय गोपनीय स्वयोनिवत् ।
इति सक्षेपत प्रोक्त किमन्यत् श्रोतुमिच्छसि ॥ ३१ ॥

इति श्रीशक्तिसङ्गमतन्त्रराजे उत्तरभागे प्रथमखण्ड श्रीमदक्षोभ्यमहोग्रतारासवादे मधुमतासिद्धिविधिर्नाम पञ्चदश पटल ॥ १५ ॥

' D ' द्व वाक्य ।

## षोडशः पटलः ।

देव्युवाच ।

देवेश श्रोतुमिच्छामि ह्यन्त्या ऐनिर्णयम् ।

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथं तत् कथयामि ते ॥ १ ॥
तथापि तव सद्भक्त्या कथ्यते शृणु साम्प्रतम् ।
चन्द्राग्निपक्षषोडाख्या परा निर्वाणतत्परा ॥ २ ॥
षट्शाम्भवं ततो देवि चक्रसंभेदनेन च[1] ।
स्वचक्रदेहविज्ञानं परकायप्रवेशनम् ॥ ३ ॥
एतज्ज्ञानाद्भवेन्मेधा दीक्षा प्रोक्ता मया तव ।
हादाविदं[2] निगदितं शृणु कादौ महेश्वरि ॥ ४ ॥
चन्द्राग्निरसराज्ञी च महाराज्ञी ततः शिवे ।
महाकामकला काली गुह्यकाली ततः शिवे ॥ ५ ॥
गुह्यकाली द्विधा प्रोक्ता सकला निष्कला क्रमात् ।
दशवक्त्रा तु सकला प्रोक्ता वासिष्ठिका कला ॥ ६ ॥
उग्रा सौम्या महाक्रूरा त्रिविधा सा[3] प्रकीर्त्तिता ।
निष्कला गुह्यशब्दान्ता[4] कालीभेदेन कीर्त्तिता ॥ ७ ॥
केवलेयं भवेन्मेधा प्रीत्या[5] साम्राज्यदायिनी[6] ।
चन्द्राग्निवेदपञ्चार्णा तथा नीलाक्रमेण च ॥ ८ ॥
हंसतारा महानीला तदन्ते चीनशाम्भवी ।
केवला तु भवेन्मेधा सिद्धिक्रद्विक्रिया द्विधा[7] ॥ ९ ॥

[1] D नव । [2] D N मुद्रा त्विदं । [3] B C N त्रिधा सापि । [4] C °संक्रान्ता । [5] D दीक्षा । [6] N °रूपिणी । [7] D प्रकीर्त्तिता ।

तृतीया दिव्यसाम्राज्यमेधा दीक्षा प्रकीर्तिता ।
देवरूपा दिव्यरूपा मन्त्ररूपा महत्परा ॥ १० ॥
सर्वरूपा सर्वपूर्वा महत्साम्राज्यमेधया[1] ।
सिद्धिऋद्धि[2]क्रमेणैव भेदबाहुल्यमीरितम् ॥ ११ ॥
विद्याराज्याभिधा दीक्षा छिन्नमस्ताविधौ स्मृता ।
चन्द्रवह्निरसो रक्तं श्यामा च षोडशी तथा ॥ १२ ॥
परापोढा सप्तदर्शी[3] तद[4]तीता परा भवेत् ।
दीपिनी[5] मालिनी कुब्जा[6] क्रमाद्विद्यादिराज्यता ॥ १३ ॥
बगलाख्या महेशानि साम्राज्यपारमेष्ठिता ।
चन्द्रवेदसूक्ष्ममेरुं मंत्रहीनं शिवात्मकम्[7] ॥ १४ ॥
हृदयं च शतार्णा च पञ्चास्त्रं कुल्लुका तथा ।
गायत्रीक्रमयोगेन साम्राज्यपारमेष्ठ्यधृक् ॥ १५ ॥
एतत्पञ्चकसंयुक्तः सर्वसाम्राज्यबुद्धि[8]धृक् ।
श्रीदिव्यसर्वसाम्राज्यदीक्षा सर्वोत्तरा भवेत् ॥ १६ ॥
ततोऽपि दीक्षा देवेशि नास्ति ब्रह्माण्डगोलके ।
दशविद्याप्रभेदाश्च महाविद्याप्रभेदजाः ॥ १७ ॥
सिद्धिविद्याप्रभेदाश्च महामंत्रास्तथैव च ।
तदङ्गमंत्रा देवेशि शावरं दशशावरम् ॥ १८ ॥
कालशावरकं देवि तथैव सिद्धशावरम् ।
त्रिधा दर्शनमंत्राश्च तथाम्नायक्रमोद्भवाः ॥ १९ ॥
कादिहादिकहत्वेन ऊर्ध्वा[9]म्नायाः क[10]लौ शिवे ।
तथायतनमन्त्राश्च यत्किञ्चिन्मंत्रजालकम् ॥ २० ॥
सर्वाधिकारो देवेशि एतद्दीक्षाविधौ भवेत् ।

[1] C °सा । [2] B क्रिया द्विवा° । [3] C सप्तदर्शी । [4] C भेदा° । [5] N °का । [6] B कम्पा, D कुब्जा । [7] B °न्तरं । [8] D °सिद्धि° । [9] D शुद्धा° । [10] C °योल्क° ।

एतद्दीक्षासमायुक्तः साक्षात् श्रीकालिका स्वयम् ॥ २१ ॥
प्रहराष्टक्रमेणैव दशविद्यास्वरूपधृक् ।
कामकलाभिधा विद्या सभेदा वृत्तिदेवता ॥ २२ ॥
अङ्गमन्त्रास्तथान्येऽपि तस्य वक्त्रगताः सदा ।
क्रमदीक्षा महेशानि पञ्चविद्यासु भेदतः ॥ २३ ॥
तदङ्गमन्त्रा गायत्री कुल्लुकापञ्चकं शिवे ।
अन्यविद्याविधौ प्रोक्तं रहस्यातिरहस्यकम् ॥ २४ ॥
क्रमदीक्षां विना देवि यो जपेत् साधकाधमः ।
स दरिद्रो महापापी सुतहारी प्रजायते ॥ २५ ॥
श्रीविद्यायां कालिकायां तारायां परमेश्वरि ।
क्रमदीक्षां विना देवि यो जपेत् साधकाधमः ॥ २६ ॥
स दरिद्रो महाघोरो लक्ष्मीहीनस्तु निन्दितः ।
अन्धः काणः कृशः कुब्जः[1] पङ्गुः[2] षण्डस्तु कुष्ठयुक् ॥ २७ ॥
सर्वरोगयुतो भूयादाधि[3]चिन्तासमाकुलः ।
सुतहारी च स्त्रीहारी कन्याराज्यविनाशकः ॥ २८ ॥
अथवा वातुलो भूयान्मन्त्र[4]क्षोभमवाप्नुयात् ।
देवताशापमाप्नोति दारिद्र्यं तद्गृहे सदा ॥ २९ ॥
विशेषाद्देवदेवेशि स्त्रीहारी विकलः सदा ।
क्रमदीक्षासमायुक्तो राजा भवति निश्चितम् ॥ ३० ॥
महाविभवसंयुक्तः सर्वसिद्धिसमन्वितः[5] ।
विजयी विनयी साधुः सिद्धश्च सिद्धिदः शुभः ॥ ३१ ॥
ब्रह्मात्मा सत्यवेत्ता त्रिकालज्ञः कविः सुखी ।
कोटिसिद्धीश्वरः शूरः सुन्दरः काममोहनः ॥ ३२ ॥
आनन्दात्मा परात्मा च परातीतगुणोत्तरः ।

[1] C कृष्णः । [2] C उग्रः । [3] D °दरि° । [4] D °दक्ष° । [5] N °मवाप्नुयात् ।

राजराजेश्वरः साक्षात् महाकालसमः कलौ ॥ ३३ ॥
एतद्विद्योपासकस्य दारिद्र्यं दीनता क्वचित् ।
गुरुहीनात् क्रमत्यागात् सम्प्रदायवियोगतः ॥ ३४ ॥
दारिद्र्यं प्रथमं भूयान्नात्र कार्य्या विचारणा ।
चिन्तामणिगृहं यत्र यत्र रत्नस्य मन्दिरम्[1] ॥ ३५ ॥
नवरत्नात्म्यसोपानं सर्वैश्वर्य्यमयं गृहम् ।
कल्पवृक्षवनं यत्र पारिजातवनं तथा ॥ ३६ ॥
स्पर्शमणेस्तु प्राकारो दारिद्र्यं तत्र कुत्र वै ।
तस्मात् क्रमविहीनस्य दारिद्र्यं तु पदे पदे ॥ ३७ ॥
क्रमयुक्तं गुरुं प्राप्य क्रमं सम्प्रार्थयेत्सुधीः[2] ।
अन्यथा गुरुमौढ्येन[3] दारिद्र्यत्वमवाप्नुयात् ॥ ३८ ॥
अल्पायुर्वा भवेद्देवि नात्र कार्य्या विचारणा ।
विधेर्लिपिं तु सम्मार्ज्य तस्यायुः[4] क्षीणता व्रजेत् ॥ ३९ ॥
इति संक्षेपतः प्रोक्तं क्रमहीनस्य वै फलम् ।
गोपनीयं गोपनीयं किमन्यत् श्रोतुमिच्छसि ॥ ४० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे प्रथमखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे क्रमदीक्षाविधायको नाम षोडशः पटलः ॥ १६ ॥

[1] D मन्दिरं रत्नशोभितम् । [2] B N° धी । [3] B ° भावेन, C ° णमेयेनं । [4] C स्याः प्र° ।

## सप्तदशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि पूर्वोक्त यद्रहस्यकम् ।
गोपनीय गोपनीय तदेव कथय[1] ध्रुवम् ॥ १ ॥

श्रीशिव उवाच ।

रहस्यातिरहस्य च यन्न कस्यापि कीर्तितम् ।
तदेव कथ्यते देवि शृणु सावहिता भव ॥ २ ॥
उत्सर्ज[2]नमुपाकर्म पवित्रारोपण तथा ।
विधिवत्तु प्रकर्तव्य रक्षाबन्धस्तदुत्तरम् ॥ ३ ॥
क्रमेण परमेशानि साधक कारयेत्सदा ।
चैत्रे मासि पौर्णमास्या मदना[3]रोपण चरेत् ॥ ४ ॥
श्रावणे मासि सम्प्राप्ते पवित्रारोपणक्रियाम् ।
न कुर्यात्साधको यस्तु निष्फला सकला क्रिया ॥ ५ ॥
वर्षमात्र कृत जाप होमपूजादिसत्क्रियाम् ।
सर्वं हन्ति महेशानि तस्मादेतत् समाचरेत् ॥ ६ ॥
आदौ नित्य महेशानि ततो नैमित्तिक चरेत् ।
उपाकर्माभिध कर्म नित्यवत् परिकीर्त्तितम् ॥ ७ ॥
नैमित्तिक पवित्राख्य[4] काम्यो रक्षाविधिर्भवेत् ।
नैमित्तिकद्वय यत्र तदन्त्य काम्यमुच्यते ॥ ८ ॥
काम्यद्वय यत्र भवेत्तदाद्य च निमित्तजम् ।
नित्यद्वय यत्र भवेत्तदन्त्य काम्यनित्ययुक् ॥ ९ ॥

[1] C N कथ्यतां । [2] D N ° द्वत ° । [3] Frequently replaced in all MSS as दमना ° । [4] C पवीवेत्ता ।

आश्वलायनं[1] श्रवणे पूर्णा[2] कात्यायने भवेत् ।
पौर्णमास्या सामगानां पञ्चम्यां हस्तजे[3]ऽपि च ॥ १० ॥
उपाकर्म प्रकर्त्तव्यं तदन्ते नित्यपूजनम् ।
ततः पवित्रपूजा स्यात्ततो रक्षाविधिर्भवेत् ॥ ११ ॥
सूतकद्वितये देवि ग्रहणे संक्रमे परे[4] ।
उपाकर्माणि देवेशि कुर्य्यात् भाद्रपदे नरः ॥ १२ ॥
पवित्र[5]रक्षणं शान्ति कुर्यात् भाद्रपदे सदा ।
पञ्चम्या च दशम्यां च चतुर्दश्यां तथैव च ॥ १३ ॥
पौर्णमास्या विशेषेण कुलयोगे विशेषतः ।
ग्रहणं तत्र चेद्भूयात् रक्षायोगं समाचरेत् ॥ १४ ॥
तत्र नित्यं प्रकर्त्तव्यं उपाकर्म ततो भवेत् ।
इति चन्द्रग्रहे देवि सूर्य्यवेधं समुत्सृजे[6]त् ॥ १५ ॥
अधिवास्य चतुर्दश्यां पौर्णमास्यां प्रपूजयेत् ।
दशैकविंशतिग्रन्थि सप्तविंशतिरेव च ॥ १६ ॥
चतुःपञ्चाशद्देवेशि शतमष्टोत्तरं तथा ।
पञ्चविंशति वा ग्रन्थि त्रिशतं वा सहस्रकम् ॥ १७ ॥
अष्टादशरश्मि[7]संख्य व्युत्क्रमात् परिकीर्त्तितम् ।
उत्तमादिक्रमेणैव पवित्रं त्रिविधं भवेत् ॥ १८ ॥
सूत्रं पट्टस्वर्णमयं कुशज लोमजं च वा ।
रत्नजं रौप्यजं देवि ताम्रजं शान्तिकर्मणि ॥ १९ ॥
सार्धग्रन्थिद्वयं वापि सार्धग्रन्थित्रयं च वा ।
एकग्रन्थि च वा देवि क्रमेण कारयेत् प्रिये ॥ २० ॥
सार्धग्रन्थिद्वयं देवि नागपाशः प्रकीर्त्तितः ।
सार्धग्रन्थित्रय देवि ब्रह्मग्रन्थिः प्रकीर्त्तितः ॥ २१ ॥

[1] N D °लायनानां । [2] N पुण्य° । [3] C °ये । [4] D करे ।
[5] D N °ग्रं । [6] C °स्रे° । [7] B °राशि°, D °वह्नि° ।

चन्द्रग्रन्थिर्महेशानि सूत्राणि ग्रन्थिसंख्यया ।
पट्टेन सूत्रनियमः स्वर्णे रौप्येऽपि नास्ति च ॥ २२ ॥
स्वर्णसूत्रमये पट्टे स्वर्णजे ग्रन्थिरीरित ।
ग्रन्थिं कृत्वा महेशानि पूजयेद्ग्रन्थिदेवताम् ॥ २३ ॥
सूत्रज वैष्णवे प्रोक्त शैवे पट्टसमुद्भवम् ।
स्वर्णज शक्तिमंत्रे स्यात्तद्द्वयोक्त तु सर्वत ॥ २४ ॥
पञ्चसिद्धिविधौ देवि रत्नज परिकीर्त्तितम् ।
वृत्त[1] त्रिकोण भूबिम्ब पट्कोणं च षडस्रकम् ॥ २५ ॥
दलाष्टक च वस्वार दशारं भुवनारकम्[2] ।
द्वादशार षोडशार पञ्च चार चतुर्दशम् ॥ २६ ॥
दन्ताब्ज[3] च कलाब्जं वा यन्त्राण्येतानि कारयेत् ।
मध्ये यन्त्रं च परितो रत्नानि विविधानि च ॥ २७ ॥
धारयेत् परमेशानि पवित्ररक्षणक्रमात्[4] ।
स्वर्णादौ शृङ्खलारूपा ग्रन्थय परिकीर्त्तिता ॥ २८ ॥
उत्तमादिक्रमेणैव कारयेत् परमेश्वरि ।
माणिक्य च तथा रत्नं कुरुविन्दमणिस्तथा ॥ २९ ॥
हीरके चैव वैदूर्य्ये गोमेदे पुष्परागके[5] ।
पद्मरागे नीलमणौ हरिते च[6] गरुत्मके[7] ॥ ३० ॥
करिके[8] परिशे कीटे शिवरत्ने च विष्णुजे ।
बिन्दुरत्ने[9] च मायूरे पाचे (?) कुक्कुटसञ्ज्ञके ॥ ३१ ॥
रासे[10] कृष्णे चन्द्र[11]मणौ प्रवाले मौक्तिकाम्बरे ।
रक्षायन्त्रफल देवि कोटिरत्नसम भवेत् ॥ ३२ ॥

[1] D चक्रं । [2] B ° रसकम् । [3] C ° म्बु । [4] N ° णाय च । [5] C ° गन्धके । [6] C N ° श । [7] D इयामरूपके । [8] B किरीटे । [9] B ° जाले । [10] B N त्रासे । [11] C नील° ।

यन्त्राण्येतानि विलिखेत्[1] सर्वकार्य्यार्थसिद्धये ।
श्रीविद्यायां कालिकायां तारायां छिन्नाविधौ शिवे ॥ ३३ ॥
मातङ्गया भुवनेश्वर्य्यां कमलायां च कारयेत् ।
चतुर्दले महेशानि चतुर्वर्णात्मको मनुः ॥ ३४ ॥
चतुरक्षरमात्राणि[2] कारयेत् परमेश्वरि ।
यथा दलानि कोष्ठानि तथा विद्याक्षराणि च ॥ ३५ ॥
विलिखेत् परमेशानि बीजमात्रं च वा लिखेत् ।
वयः[3]शोभा यथा देवि यथायुक्ता[4] समाचरेत् ॥ ३६ ॥
यदा बध्नाति मन्त्रेण त्वा पवित्रेण[5] वा प्रिये ।
आपदुद्धारकेणापि मूलेन विद्यया[6] क्रमात् ॥ ३७ ॥
रक्षणं बन्धयेदेवि रक्षा सर्वहृता भवेत् ।
बलिमुत्र[7] च रक्षार्थं ज्ञानार्थं गौतमादिभिः ॥ ३८ ॥
मोक्षार्थं कपिलाद्यैश्च शान्त्यर्थं शङ्करादिभिः ।
सूत्रे भेदा[8] क्रमेणैव यथायोगेन वै शृणु ॥ ३९ ॥
श्वेते रक्ते तथा पीते नीले च हरितेऽपि च ।
कर्बूरे बहुचित्रे च यथायोगेन कारयेत् ॥ ४० ॥
सूत्राणि कामनाभेदात् यथायोगेन कारयेत् ।
सर्वसिद्धीश्वरो भूयात्तत्र कार्य्या विचारणा ॥ ४१ ॥
प्रतिविद्याविधौ देवि पवित्रारोपणं भवेत् ।
प्रतिविद्याविधौ देवि रक्षा वर्णक्रमाद्भ[9]वेत् ॥ ४२ ॥
अष्टगन्धमयं सूत्रं जीवचक्रमयं च वा ।
पुष्परागसारमय[10]मम्बरोत्थं च वा प्रिये ॥ ४३ ॥
तथैवागुरु[11]सारोत्थं सूत्रं प्रोक्तं महेश्वरि ।

[1] °विधिना । [2] B °मात्र च । [3] B रत्न °। [4] B स्वयुक्ता च । [5] N D °त्सुपवित्रेन । [6] C विविधा । [7] B °मुन्दं, D °मुरी । [8] C °मो भ °। [9] D मवर्त्तं । [10] C °द मह °।

रहस्यातिरहस्यं च रहस्यातिरहस्यकम् ॥ ४४ ॥
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
ब्रह्माण्डगोलके याश्च याः काश्चिज्जगतीतले ॥ ४५ ॥
समस्ताः सिद्धयो देवि रक्षाधारकमायके[1] ।
सम्भ[2]वन्ति महेशानि नात्र कार्य्या विचारणा ॥ ४६ ॥
वाञ्छासिद्धिर्भवेद्देवि नात्र कार्य्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥ ४७ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे कालीखण्डे प्रथमभागे श्रीमदक्षोभ्यमहोग्रतारासंवादे
सूत्रनिर्णयो नाम सप्तदश पटलः ॥ १७ ॥

[1] D रक्षां परत्वार्थे. ।    [2] D संस्तु° ।

## अष्टादशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि गोप्याद्गोप्यतरं महत्[1] ।

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथ्यते शृणु साधनम्[2] ॥ १ ॥
पूर्णाभिषेकदीक्षादियुक्तानामपि पार्वति ।
पवित्रारोपणं रक्षा समैव परिकीर्तिता ॥ २ ॥
सद्योऽधिवासनं वापि पूर्वाधिवासनं च वा[3] ।
कृत्वा पवित्रं कर्त्तव्यं सर्वकामा[4]र्थमेव च ॥ ३ ॥
सर्वरत्ने च परिशे तथा गरुडरत्नके ।
सर्वरक्षासुसिद्ध्यर्थं रक्षणं बन्धनं चरेत् ॥ ४ ॥
तारा श्रीकामवाख्याया काली छिन्ना च तारिणी ।
बगला विमला धूम्रा वसोर्धारा षडङ्ककम्[5] ॥ ५ ॥
त्रितारं पञ्चतारं च[6] सप्तर्विंशत्प्रयोगतः ।
आकर्षिण्यां परां मायां पराप्रासादकेऽपि च ॥ ६ ॥
बीजान्येतानि बाणाश्च प्रेतफेत्कारकामतः ।
एकद्वित्रिचतुःपञ्चषडर्णक्रमयोगतः ॥ ७ ॥
विद्यां संयोजयेत्तत्र सर्वसिद्ध्यर्थमेव च ।
श्रावण्यां पौर्णमास्यां तु रक्षां दशविधां चरेत् ॥ ८ ॥
गोरक्षा हयरक्षा च गजरक्षा तृतीयका ।
जनरक्षा देशरक्षा गृहरक्षा रसाभिधा ॥ ९ ॥

[1] B गोप्यं महत्तरं । [2] B पार्वति । [3] B वरं । [4] N "र्थां" । [5] C षडक्षकं ।
[6] D " भावेन ।

धनरक्षा बा[1]लरक्षा क्षेत्ररक्षा परा मता ।
सर्वरक्षा च दशमी रक्षा दशविधा मता ॥ १० ॥
अष्टम्या च नवम्यां च पञ्चम्या दशमीदिने ।
चतुर्दश्यां पौर्णमास्या पक्षयोरुभयोरपि ॥ ११ ॥
उपाकर्म भवेदादौ तत [2] पवित्रधारणम् ।
रक्षाबन्धस्तदन्ते स्यात् क्रमात् त्रितयमाचरेत् ॥ १२ ॥
चतुर्थ्यामधिवासो हि गणेशे परिकीर्त्तित ।
पञ्चम्या धारण कार्य्यं मातङ्ग्यामधिवासनम् ॥ १३ ॥
दशम्या धारण कार्य्यं सप्तम्यामधिवासनम् ।
अष्टम्या पूजन कार्य्यं धार्य्यं सौरे महेश्वरि ॥ १४ ॥
अष्टम्यामधिवासो हि नवम्या धारण शिवे ।
शक्ते प्रोक्तमिद देवि पाञ्चरात्रक्रम शृणु ॥ १५ ॥
नवम्यामधिवासो हि दशम्या धारण शिवे ।
वैष्णवे चैव द्वादश्या त्रयोदश्या विधारणम् ॥ १६ ॥
अधिवासश्चतुर्दश्या पौर्णमास्या प्रपूजनम् ।
शैवे प्रोक्तमिद देवि श्रीविद्याया च पौर्णिमा ॥ १७ ॥
चान्द्रेऽपि पौर्णमास्या च पवित्रधारण चरेत् ।
कुशै काशै सदा कार्य्यं पवित्र ब्रह्मचारिणाम् ॥ १८ ॥
वनस्थाना शणभव त्रसरीस[3]भव च वा ।
यतीना गैरिकाक्त च सर्ववर्णं गृही चरेत् ॥ १९ ॥
राज्ञा सुवर्णसूत्राद्य[4] क्षत्रियाणा च रौप्यजम् ।
द्विजाना सूत्रसम्भूत क्रमेण परिकीर्त्तितम् ॥ २० ॥
तथैव रक्षण देवि सर्वथा सममत्र च ।
अत्रार्थे देवदेवेशि इतिहासत्रय शृणु ॥ २१ ॥

[1] D व॰ । [2] N॰ दावन्त । [3] D एर्वीरा॰ । [4] D॰ ग्र च N॰ ग्रस्य ।

पुरा श्रीकार्त्तिकेयाय पार्वत्या रक्षण कृतम्[1] ।
शच्या देवेन्द्र[2]वश्यार्थं जयाय वृत्रनाशने ॥ २२ ॥
महाविद्यादिभि पूर्वं रक्षितो वटुक[3] पुरा ।
पूर्वं कृतयुगे देवि नहुष क्षत्रियेश्वर ॥ २३ ॥
उपाकर्म विधायाथ पवित्रारोपणे स्थित[4] ।
कृत्वा पवित्र यत्नेन देवेन्द्रसदनाद्गृहम् ॥ २४ ॥
तन्मार्गमध्ये देवेशि विना रक्षा च योऽश्रम ।
बुद्धेर्विपर्य्ययो जातो रक्षाहीनो नराधिप ॥ २५ ॥
रक्षाबन्धनमात्रेण मासद्वादशरक्षणम् ।
अकृते देवदेवेशि मतिभ्रष्टो नरो भवेत् ॥ २६ ॥
वर्षमात्रकृता रक्षा रक्षाबन्धनयोगत ।
अङ्क[5]यन्त्रै[6]र्महादेवि बीजाङ्करपि पार्वति ॥ २७ ॥
अङ्कबीजै पताकाद्यै सर्वत्र रक्षण भवेत् ।
वेदसस्कार एवात्र चोपाकर्म प्रकीर्त्तितम् ॥ २८ ॥
गृहीतवेदमन्त्रस्य रक्षण तु पवित्रकम् ।
तदधिष्ठातृरक्षार्थं रक्षाबन्धनमीरितम् ॥ २९ ॥
तस्मात् सर्वप्रयत्नेन रक्षाबन्धनमाचरेत् ।
विना रक्षा महेशानि वर्षमात्र कृता क्रिया ॥ ३० ॥
सकला निष्फला देवि देवता विमुखी भवेत् ।
सर्वैर्सर्वरपि देवेशि रक्षाबन्धनमाचरेत् ॥ ३१ ॥
सर्वरक्षा तदा देवि भवत्येव न सशय ।
नित्य नैमित्तिक काम्य क्रमात्त्रितयमीरितम् ॥ ३२ ॥
इति सक्षेपत प्रोक्त किमन्यच्छ्रोतुमिच्छसि ।

[1] B भृत, C वदत् ।  [2] C °न्द्र ।  [3] C °हुक ।  [4] B शिवे, स्थिते ।
[5] N अङ्ग°, C अर्क° ।  [6] C पत्रै° D मन्त्रै° ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥ ३३ ॥

श्रीशिव उवाच ।

किं तद्रहस्यं देवेशि तद्वदस्व प्रियंवदे ।

श्रीदेव्युवाच ।

पवित्रारोपणं कर्म मदनारोपणं तथा ॥ ३४ ॥
कथ्यतां देवदेवेश यद्यहं तव वल्लभा ।

श्रीशिव उवाच ।

*आषाढ उत्तमो मासः श्रावणो मध्यमः स्मृतः ॥ ३५ ॥*
हीनो भाद्रपदो मासः पक्षौ सितसितेतरौ ।
प्रशस्तः शुक्लपक्षस्तु तदभावे परः स्मृतः ॥ ३६ ॥
पञ्चमी चाष्टमी चैव नवमी दशमी तिथौ ।
द्वादश्यां च चतुर्दश्यां पौर्णमास्याममथापि या ॥ ३७ ॥
पट्टसूत्रविशिष्टं तु कार्पासजनितं तथा ।
त्रिगुणं त्रिगुणीकृत्य प्रशस्यामब्रह्मचारिणा ॥ ३८ ॥
पश्चिमास्योनमनुर्निर्दिशिणैः शोधयेत्ततः ।
मन्त्रैरथ पवित्राणि मनोरम्याणि कारयेत् ॥ ३९ ॥
अष्टोत्तरशतं श्रेष्ठं मध्यमं तु तदर्धकम् ।
तदर्धं च कनिष्ठं स्यात् यथाशक्त्या तु पूरयेत् ॥ ४० ॥
पूर्वोक्ततन्तुभेदेन द्रव्यभेदेन वा शिवे ।
कृत्वा पवित्रं यत्नेन ग्रन्थिं दत्त्वा विचक्षण ॥ ४१ ॥
उत्तरास्योदितैर्मन्त्रैर्ग्रन्थींस्तु कारयेत् ।

¹ C N स्व । ² N हस्त ¹ । ³ D ग्रन्थ ¹ ।

चित्रैश्चित्रसमायुक्तं कुङ्कुमादिभिरद्रिजे[1] ॥ ४२ ॥
पवित्रदानदिवसे पूर्वोक्तम्[2]धिवासनम् ।
सद्योऽधिवासनं चापि कुर्यात्तु परमेश्वरि ॥ ४३ ॥
रात्रौ समयि[3]भिः साकं नित्यपूजामनन्तरम् ।
ऊर्ध्वसिंहासनैर्मन्त्रैः सूत्रपातस्तु वामनः[4] ॥ ४४ ॥
प्रार्थयित्वा स्तवेनापि[5] रक्षां कृत्वा[6]वगुण्ठनैः[7] ।
दन्तकाष्ठं तथा गन्धं यज्ञचन्दनमृत्तिकाम् ॥ ४५ ॥
सिद्धार्थंश्च तथा धात्रीफलं शृङ्गारभूषणम् ।
नवुत्पमष्टसु पत्रा[8] (!) निक्षेया उत्तरोत्तरम् ॥ ४६ ॥
पूर्वादिदिक्षु क्रमशः पवित्रं सूत्रभाजनम् ।
अधश्चपत्रपात्रेषु प्रक्षिपेत् सिद्धिहेतवे ॥ ४७ ॥
"हुँ"कारमोमस्याहेतमङ्गनागाशितिध्यजाः[9] ।
[10]सूर्यः सदाशिवः सर्वा देवता स्तुर्नयाः पराः[11] ॥ ४८ ॥
सूत्रेषु पूजयेद्भक्तविम्र्यात्ताश्च त्रिसूत्रके ।
इषा च पौरी वाणी[12] गायत्री चापराजिता ॥ ४९ ॥
विजया च जया देवि मुक्तिदा च सदाशिवा ।
मनोन्मनी च नवमी दशमी सर्वतोमुखी ॥ ५० ॥
प्रथिम्या देवताः पूज्या उपचारैः पञ्चसंकैः[13] ।
मूलमन्त्रेण चामन्त्र्य पवित्रेषु फला यजेत् ॥ ५१ ॥
नित्याः षोडश देवेति श्रीविद्यां च स्मरेत् प्रिये ।
अथ ताराद्याष्टवाणीः पद्मस्थाने प्रकल्पयेत् ॥ ५२ ॥
शान्त्यां शान्त्यादिनित्याश्च पूजयेत् परमेश्वरि ।

[1] C °च द्रिजे । [2] B D N पूर्वतः° । [3] B C N °स[illegible]° । [4] B [illegible] ।
[5] B° स्तवनैर्वा, D °स्तवनैर्वा । [6] N °[illegible]° । [7] D स्तवेन च । [8] C °त्रा ।
[9] C °[illegible] [illegible] । [10] C omit this line. [11] B °रा, D [illegible] ।
[12] B देवा । [13] D पञ्चकैः ।

